तथा शुक्तिशकलमेतत्। एवंच तत्र पुरुषस्य दोषः प्रतारकस्य हृदये अन्यत् स्वयमपि जानाति नेदं रजतं किन्तु परप्रतारणायेदं रजत मिति ब्रवीति इत्याह अन्यदिति एवं चानाप्तवाक्येऽयंसन्देहो भवति यथोच्यते तथास्ति नास्तिवेत्याह एवं वदत इति तथाच पुरुषदोषापराधाधीनम प्रामाण्यं पौरुषेयवाक्ये एव। अपौरुषेये तु वक्तुरभावात् निराश्रया दोषाः न प्रामाण्यं निघ्नन्ति इत्याह अनपेक्षत्वादिति एवं चापौरुषेयवाक्यप्रामाण्य-निर्णयाय न प्रत्ययान्तरं तन्मूलभूत प्रत्यक्षादि-प्रमाणान्तरं संवादकत्वेनापेक्षितव्यम् नत्रा अनाप्तपुरुषापेक्षया पुरुषान्तरमाप्तपुरुषःतदपेक्षया पौरुषेये वाक्ये वक्तृगुणावधारणाधीनं प्रामाण्यम् नत्वपौरुषेये वेदवाक्ये इत्यतोऽनपेक्षम्प्रामाण्यमस्य बादरायणग्रहणं पूजार्थं नत्वात्मनोऽननुमति-सूचनार्थम्। पूजा च ग्रन्थस्य बादरायणस्य च भवति धन्यो महर्षि र्बादरायणोऽतीन्द्रियज्ञान-निधिर्यस्य मतं मीमांसाशास्त्रेप्यस्ति इति प्रशंसा-

रूपापूजा बादरायणस्य प्रतीयते धन्यमिदमात प्रामाणिकं मीमांसा शास्त्रं यस्मिन् बादरायणस्यापि महर्षे र्मतमस्तीति प्रकृतग्रन्थस्यापि प्रामाणिकार्थाभिधानरूपा स्तुतिः प्रतीयते एतदुभयस्तुत्या ग्रन्थे प्रामाणिकत्वनिश्चय स्ततः प्रेक्षावतांमसन्दिग्धा प्रवृत्ति रिति युज्यत एव तदभिधानम् सूत्रे पीतिभावः इति कल्पकलिकायामौत्पत्तिकं पञ्चमं सूत्रम् ।

वृत्तिकारस्तु अन्यथेमंग्रन्थं वर्णयाञ्चकार तस्य निमित्तपरीष्टिरित्येवमादिं न परीक्षितव्यं निमित्तं प्रत्यक्षादीनिहि प्रसिद्धानि प्रमाणानि तदन्तर्गतञ्च शास्त्र मत स्तदपि न परीक्षितव्यम् इत्येवमादिमिति इत्येवमादि यस्मिन्स इत्येवमादि ग्रन्थस्तं इत्येवमादिं ग्रथं वृत्तिकारोन्यथा वर्णयाञ्चकारेत्यर्थः विशेष्यग्रन्थस्य पुल्लिङ्गतया तद्विशेषणस्यापि तदेवयुक्तमितिमकारान्तमित्येवमादिमिति पाठ एव समीचीनः । यत्तु सामान्येन नपुसकत्वविवक्षया लुप्तमकारन्त

इत्येवमादि इति पाठः साधुरित्युक्तं तदसत् अनुक्तविशेष्ये सामान्यविवक्षणेन नपुंसकं भवतीत्येव तदर्थतया प्रकृते विशेष्यस्योपादानेन तदनुशासनाप्रवृत्तेः सत्यपि विशेष्ये शरदः कृता-र्थतेत्यादौ सामान्यविवक्षया नपुंसकप्रयोगोप पादनन्तु गत्यन्तरविरहादाश्रितं नचेहगतिविरह इति मकारान्त पाठ एव श्रेयान् । न परीक्षितव्य मिति नच नञः सूत्रेऽनुपादाना न्निमित्तपरी-क्षानिषेधपरतया व्याख्यानमयुक्तमिति वाच्यम् नञोऽध्याहारेणलाभसम्भवात् प्रसिद्धानीति सन्दिग्धे विचारःप्रवर्तते विचारस्य निर्णयफल-कत्वात् । प्रत्यक्षादीनि लोके प्रसिद्धानि प्रमाणा-नि । नहि केचित् प्रत्यक्षादिषु संशेरते इदं प्रमा-णं नवेति इति विचारफलस्य निर्णयस्य पूर्वमेव सिद्धत्वात् एतद्विचारो निष्फलत्वान्नकार्य्या इत्य-भिप्रायो वृत्तिकारस्य । तदेतद्वृत्तिकारव्याख्यानं दूषयति भाष्यकारः । अत्रोच्यते इत्यादिना ।

भा० अत्रोच्यते व्यभिचारात्

परीक्षितव्यम् शुक्तिका हि रजतवत् प्रकाशते यतः तेन प्रत्यक्षं व्यभिचरति तन्मूलत्वाच्चानुमानादीन्यपि । तत्रा परीक्ष्य प्रवर्तमानोर्थात् विहन्येत । अनर्थञ्चाप्नुयात् कदाचित् ।

अयंभावः यदिप्रत्यक्षमात्रमभिचारि स्यात् तदा तत्परीक्षणमसंगतं स्यात् । परीक्षाफलस्य तत्प्रामाण्यनिर्णयस्य परीक्षातः पूर्वमेव जातत्वात् । किन्तु प्रत्यक्षं व्यभि चार्यपि दृश्यते इत्याह भाष्ये शुक्तिका हि रजतवत् प्रकाशते नचैतज्ज्ञानं प्रमाणमिति केनाप्यङ्गीक्रियते तथाच प्रत्यक्षेऽपिव्यभिचारदर्शनात् प्रामाण्यं परीक्षणीयमेव । ननु शुक्तिरजताभास स्यायथार्थत्वलक्षणव्यभिचारेऽपि तद्भिन्नस्यप्रत्यक्षस्य न व्यभिचार इति प्रत्यक्षस्य व्यभिचारोद्भावनं भाष्कारस्य कथं सगच्छते इति चेदित्थम् । प्रत्यक्षतदाभासयोर्लक्षणभेदमज्ञात्वा द्वयोरिन्द्रियज-

न्यत्वाविशेषात्प्रत्यक्षत्वमेवेत्यभिमानेनाभास व्यभिचारः प्रत्यक्षव्यभिचारत्वेनोदाहृत इति ध्येयम् । तस्मात् प्रत्यक्षंपरीक्षणीयमेव । अपरीक्ष्येति शुक्तौरजतबुद्ध्या प्रवर्त्तमानः पुरुषः शुक्तिमेव लभते न रजतमित्याभासितादर्थाद्रजता त्प्रच्यवते क्वचिच्च सर्परज्जुबुद्ध्या प्रवर्त्तमानः रज्जुं न लभते अनर्थं सर्पं लभते इति समीहितलाभाय परीक्षितव्यमेव प्रत्यक्षादीतिभावः । भवतु नाम यस्य प्रत्यक्षतदाभासयो विवेको नास्ति तदनुसारेण प्रत्यक्षातदाभासयोरविशेषादाभासव्यभिचारेण प्रत्यक्षपरीक्षणम् । यस्य तुपुनः प्रत्यक्ष तदाभासयो विवेकोऽस्ति तस्य सर्वत्राव्यभिचारित्वात्प्रत्यक्षमपरीक्षणीयमेव शुक्तिरजतादिज्ञानस्य तु न प्रत्यक्षत्वम् । किन्त्वाभासत्वमेवेति भवतु तस्य व्यभिचारः किमायातमेतेन प्रत्यक्षस्य ततो भिन्नस्येत्यभिप्रायेणाशंकते ।

भा० नैतदेवम् यत्प्रत्यक्षं न तद्

व्यभिचरति न तत् प्रत्यक्षम् किन्तर्हि प्रत्यक्षम् सत्सम्प्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम् यद्विषयं ज्ञानं, तेनैव सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धि-जन्म सत् प्रत्यक्षम् यदन्यविषयज्ञान मन्यसम्प्रयोगे भवति न तत् प्रत्यक्षम्। कथं पुनरिदमवगम्यते ? इदं तत्सम्प्रयोगे इदमन्य सम्प्रयोगे इति। यत् न अन्य-सम्प्रयोगेतत् तत्सम्प्रयोगे एतद्विपरीत मन्यसम्प्रयोग इति। कथं ज्ञेयम् यत् शुक्तिकायामपि रजतं मन्यमानो रजत-सन्निकृष्टं मे चक्षुरिति मन्यते।

नैतदेवमिति यत्प्रत्यक्षमदुष्टेन्द्रियजन्यंतन्न व्यभिचारि यच्च व्यभिचरति आभासं तन्न प्रत्यक्षमदुष्टेन्द्रियसनिकर्षजत्वाभावादिति आ-

भासव्यावृत्तं प्रत्यक्षलक्षणं पृच्छति किमिति उत्तरमाह सत्संप्रयोग इति यद्यपि विषयविशेषणोपादानविरहेण शुक्तिरजताद्याभासेऽतिव्याप्त्यो भाष्यकृता सत्संप्रयोग इति सूत्रं लक्षणपरतया न व्याख्यातं किन्तु प्रत्यक्षानुवादकमिति व्यवस्थापितं तथापि वृत्तिकृता तत्सतो र्व्यत्यासं कृत्वा तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षमिति सूत्रं मत्वा लक्षणपरतया व्याख्यातं तदेव दर्शयति भाष्यकारः तत्संप्रयोग इति एवं च येन विषयेणेन्द्रियसंप्रयोगः तद्विषयकमेव प्रत्यक्षम् शुक्तिरजताद्याभासे तु शुक्तिशकलेनेन्द्रियसंप्रयोगः ज्ञानं तु रजतस्य तेन सह नेन्द्रियसंप्रयोग इति न तत्रातिव्याप्तिरित्याह तेनैवेति। नच प्रत्यक्षलक्षणे ज्ञातेऽपि आभासपरिज्ञानाय तस्यापि लक्षणं वाच्यम् अन्यथा तदज्ञाने तद्विपरीतप्रत्यक्षविवेको न स्यादिति वाच्यम्। अर्थापत्त्यैवाभासज्ञानसम्भवा त्तदर्थलक्षणानावश्यकत्वात्। तथाहि तत्संप्रयोगजं प्रत्यक्ष-

मित्यभिधाने अर्थाद् ज्ञायते प्रत्यक्षविपरीत-
माभासं अन्यसंप्रयोगजमिति न सूत्रकृत स्तस्य-
विशिष्य लक्षणकरणावश्यकता इत्यभिप्रायेणाह
एतद्विपरीतमिति नन्वाभासदशायां तत्र तत्सं-
प्रयोगजत्वमेव प्रतीयते नान्यसंप्रयोगजत्वमत
एवाध्यासवान् रजतसंनिकृष्टं मे चक्षुरित्येव
जानाति तथा चाभासविवेको दुर्घट इत्याशंका-
यामाह वाधकेति तथाच नेदं रजतमिति वाध-
क ज्ञाने जाते इदं रजतमितिज्ञानं न प्रत्यक्षं
रजतेन्द्रियसन्निकर्षजत्वाभावात् किन्त्वाभासम-
न्यसन्निकर्षजत्वात् यदेतत् विपरीतं तत्प्रत्यक्षम्।
तत्संप्रयोगजमिति प्रत्यक्षतदाभासयो र्विवेकः
वाधकज्ञानेन भवति। ननु शुक्तिशकले पूर्वमिदं
रजतमितिज्ञानं जायते ततोनेदंरजतमितिज्ञानं
जायते नेदं रजतमितिज्ञानं इदं रजतमितिज्ञानं
वाधते इत्येव कुतः इदंरजतमितिज्ञानमेव नेदं
रजतमितिज्ञानं कुतो न वाधते विशेषाभावादिति
वाच्यम्। पूर्वाभासज्ञानवाधनं विना उत्तरस्य

समीचो ज्ञानस्योत्पत्तिरेव न स्यादित्यात्मला- भाय उत्तरेण पूर्वबाधः स्वीक्रियते पूर्वज्ञानोत्पत्ति- वेलाया न्तु उत्तरज्ञानस्यासत्वादेव तद्बाधनं विनैव पूर्वज्ञानस्यात्मलाभ इतिविशेषदर्शनात् पूर्वस्योत्तरबाधकत्वमिति । नच पूर्वज्ञानस्य मिथ्यात्वे उत्तरज्ञानेन बाधः तद्बाधेन पूर्वज्ञानस्य मिथ्यात्वमित्यन्योन्याश्रय इति चेन्न उत्तरज्ञानेन पूर्वज्ञानमिथ्यात्वोत्पत्ते रनङ्गीकारात् । कारण- दोषा ज्जातस्य पूर्वज्ञानमिथ्यात्वस्यावगमोबाध- कज्ञानेनेत्येवस्वीकारात् । एवं सति न पूर्वज्ञान- मिथ्यात्वमाश्रित्योत्तरज्ञानसमुत्पादः तस्यानिर्दु- ष्टेन्द्रियजन्यत्वादिति क्वान्योन्याश्रय इति । नन्वेवं बाधकज्ञानोत्तरं मिथ्यात्वनिर्णयोपपा- दनेऽपि तदुत्पत्तेः प्राक् तन्निर्णयः कथमुपपद्य- ताम् । तदानीं समीचीनमिथ्याज्ञानयोर्विशेषा- नवधारणादित आह प्रागिति ।

भा० बाधकं हि यत्र ज्ञानमुत्पद्यते नैतदेवं, मिथ्याज्ञानमिति, तत् अन्यसम्प्र-

योगे विपरीतं तत्सम्प्रयोगे इति प्राक्बाधक-ज्ञानोत्पत्तेः कथमवगम्यते यदा न तत्काले सम्यग् ज्ञानस्य मिथ्याज्ञानस्य वा कश्चि-द्विशेषः। यदा हि चक्षुरादिभिरुपहतं मनो भवति तदिन्द्रियं वा तिमिरादिभिः सौक्ष्म्यादिभि र्वाह्यो वा विषयः ततो मिथ्याज्ञानम् अनुपहतेषु हि सम्यग् ज्ञानम्। इन्द्रियमनोऽर्थसन्निकर्षो हि सम्य ग्ज्ञानस्य हेतुः असति तस्मिन् मिथ्याज्ञानं तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञानं मिथ्या भवति।

तथा च मिथ्याज्ञानानुत्पत्तावपि कारणदोषज्ञाने-नैवतन्निर्णय इति मनोदोषं दर्शयति चक्षुरादि-भिरुपहतं मनोभवतीति तथाचेन्द्रियप्रवृत्तिनि-यामकस्य मनसो ऽनवस्थाना त्तत्र मिथ्याप्रत्यय स्समुत्पद्यते। इन्द्रियस्य वाह्यस्य दोषमाह तिमि-

रादिभिरिति तथाच तिमिरादिदोषदूषितलोचनस्य पुरःस्थस्थाणौ स्थाणु र्वा पुरुषोवेति मिथ्याज्ञानजननमिति। विषयदोषं दर्शयति सौक्ष्म्यादीति आदिपदेन शुक्तिशकलगतश्वैत्यचाकचिक्यादयः तथाच दुष्टकारणनिबन्धनं मिथ्यात्वं दोषरहितकारणेन समीचीनमित्याह अनुपहितेष्विति नचैवं दोषाभावोपि ज्ञानगतामिथ्यात्वे कारणमित्यायातं तथाच परतः प्रामाण्यं स्यादित्याशंकानिवृत्तये समीचीनज्ञानकारणं दर्शयति इन्द्रियेति यद्यपि इन्द्रियार्थसन्निकर्षेऽसमीचीनज्ञानस्यापि कारणं तथापि ग्राह्येन्द्रियसन्निकर्ष स्तत्र नास्ति सन्निकर्षशब्देन ग्राह्यसन्निकर्षस्यैव प्रकृते विवक्षितत्वादिति भावः ग्राह्येन्द्रियसन्निकर्षाभावेमिथ्याज्ञानमित्याह असतीति इंद्रियत्वेन वाह्यान्तरयोः संग्रह इत्यभिप्रायेणाह तदुभयेति विषयेन्द्रियोभयेत्यर्थः तथाच विषयेन्द्रियोभयगतदोषोमिथ्याज्ञानहेतुः मिथ्याज्ञानं प्रति दोषस्यान्वयं प्रदर्श्य व्यतिरेकं दर्शयितुं पृच्छति।

भा० कथमगम्यते दोषापगमे सम्प्र-
तिपत्तिदर्शनात् कथं दुष्टादुष्टावगम इति
चेत् प्रयत्नेनान्विच्छन्तो नचेद्दोषमवगच्छा-
महि प्रमाणाभावाददुष्टमिति मन्येमहि
तस्माद् यस्यच दुष्टं करणं यत्र मिथ्येति
प्रत्ययः स एवासमीचीनः प्रत्ययो नान्य
इति।

कथमिति दोषापाये समीचीनज्ञानदर्शनादन्वयव्यतिरेकाभ्यां दोषस्य मिथ्याज्ञानहेतुत्वमित्यभिप्रायेणाह दोषापगमे इति नन्विन्द्रियाणामतीन्द्रियतया तद्गतदोषाणां प्रत्यक्षत्वासम्भवात्तद्विशिष्टेन्द्रियादेरवगमो दुर्घटः संभावनामात्रेण दोषपरिज्ञानं तु समीचीनज्ञानेऽपि सुलभमित्याशयेनपृच्छति कथंदुष्टावगम इति सम्वादेन गुणावधारणेन वा दोषाभावः शक्यज्ञान इत्याह प्रयत्नेनेति नचैतावता परतः प्रामाण्यमाशङ्कनीयम्। दोषोत्सारणमात्रप्रयोजनत्वा

रसंवादगुणावधारणादेः ततश्च संवादादिना दो-
षाभावे निश्चिते अदुष्टेन्द्रियादिजन्यत्वेन ज्ञा-
नस्य स्वतः प्राप्तं प्रामाण्यमपनोदकाभावा न्नि-
श्चीयते इति भावः मिथ्यात्वनिश्चयकारणमुपसं-
हरति तस्मादिति यस्य करणं दुष्ट मित्यनेन
दोषज्ञानस्य मिथ्यात्वनिश्चयहेतुत्वं बोध्यते यत्र
चेत्यादिना बाधकज्ञानस्यापि हेतुत्वं तत्र दर्शि-
तम् तथाच दोषज्ञानेन बाधकज्ञानेन वा मि-
थ्यात्वनिर्णयः पीतः शंखः इत्यादौ चन्द्रमण्डल-
परिमाणादौ च तदानीं विपरीतज्ञानानुदयोऽपि
दोषज्ञानादेव मिथ्यात्वनिर्णयो नान्यथा शुक्ति-
रजतादिस्थले तु नेदं रजतमितिविपरीतज्ञानात्
पूर्वज्ञानस्येदं रजतमितिज्ञानस्य मिथ्यात्वनिर्णय
इतिभावः नच विपर्ययज्ञानस्यैव मिथ्यात्वनिर्णा-
यकत्व मस्तु किन्दोषज्ञा नानुमानेनेति चेन्न
मिथ्याज्ञानोत्तरं सर्वत्रविपर्ययोत्पादे नियमाभा-
वात्। अत एव दूरत्वादि दोषावधारणेन चन्द्र-
मण्डलादिपरिमाणज्ञाने मिथ्यात्वसिद्धिः अन्यथा

तत्र विपर्ययज्ञानानुत्पादेन तदसिद्धिप्रस-
ङ्गात् एवं पित्तादिदोषदूषितलोचनस्य पीतः
शंख इतिभावदशायां विपर्ययज्ञानानुत्पा-
देऽपि कारणदोषावगमादेव तन्निर्णयः
पुरुषान्तरविपर्ययज्ञानेन तत्रमिथ्यात्वोपपादन-
न्तु न युक्तिसहम् आम्नायार्थनिश्चयेऽपि ना-
स्तिकादिविपर्ययेण मिथ्यात्वापत्तेः तदान्मता-
भ्युपगन्तृपुरुषविपर्ययापेक्षेण तु शाक्यादिसि-
द्धान्तस्यापि मिथ्यात्वं न स्यात् तेषां तत्र विपर्यय-
ज्ञानानुदयात् एवं च यत्र बाधकज्ञानं नावतरति
तत्र कारणदोषज्ञानेनैव मिथ्यात्वनिर्णयः तद-
वतारदशायां तु तेनेति बोध्यम्। यद्यपि विप-
र्ययस्थलेऽपि दोषोऽस्त्येव। तथापि पूर्वोपस्थित-
विपर्ययेण मिथ्यानिर्णये पश्चादनुमीयमानस्य
दोषस्य तत्राप्रयोजकत्वमित्याशयात्। एवंच
यज्जातीयज्ञाने क्वचिद्व्यभिचारो दृष्टः तज्जा-
तीयज्ञाने जाते बाधकं विना तत्र संशयो जायते
यथापित्तादिदोषदूषितलोचनः प्रथमं शङ्खं पीतं

पश्यन् सन्दिग्धे किमयं पीत उतपूर्वदृष्टवत् शुक्ल इति संशयेन निश्चये प्रतिवद्धे पश्चात् पित्तादि दोषज्ञाना त्तत्र मिथ्यात्वं निश्चिनोति। नच चन्द्रमण्डलादिपरिमाणज्ञाने स्वान्यत्रापि विना विपर्ययोदयं युक्तिमूलकानुमानेन प्रत्यक्षस्या-भासत्वं स्यादिति वाच्यम्। तथासति जात्या-दिज्ञानस्यापि धर्मिभेदाभेदविकल्पयुक्तिमूलके-नानुमानेनाभासीकरणत्वापत्या गोत्वाद्यनुभव-प्रामाण्यापलापापत्तेः। एवं च यादृशज्ञाने व्य-भिचारो दृष्ट स्तादृशज्ञाने एवं संशयो जायते नान्यत्रेति आलोकमध्यवर्त्तिघटादिप्रत्यक्षे क्व-चिदपि व्यभिचारादर्शना न्न तादृशज्ञाने तत्संदेह इति न तत्र कारणदोषानुमानेन मिथ्यात्वाव-गमः शक्यसम्पादन इति। जात्यादिज्ञानस्य मिथ्यात्वे तद्बाधः तद्बाधेन तु तस्य मिथ्यात्वाव-गम इत्यन्योन्याश्रयः स्यात्। नचभवन्मते-प्येष दोषः गोत्वादिज्ञानस्य वाधकादर्शनेऽमि-थ्यात्वं तदमिथ्यात्वे च वाधाभाव इति वाच्यम्

स्वतः प्रामाण्यवादिनां ज्ञानसत्यत्वस्य बाधकानपेक्षितत्वेन स्वतएवोत्पत्त्या तद्विरोधादेव बाधकज्ञानानुदया न्नान्योन्याश्रय इति दिक् ॥

॥ इति कल्पकलिकायां वृत्तिकारव्याख्यानम् ॥

बोद्धा स्तु स्वप्ने यथा बाह्यार्थं विनैव अनादिवासनावशात् विविधगजतुरङ्गादिज्ञानं जायते इति सर्वानुभवसिद्धमेवं प्रबोधसमयेऽपि बाह्यार्थं विनैव कुम्भोऽयं स्तम्भोयमित्यादि कुम्भस्तम्भादिर्विविधविषयकप्रतीति रुपपद्यते एवेति नैतत्प्रतीतिमात्रेण बाह्यार्थसद्भावः स्वीकर्तु मुचितः। अन्यथा स्वाप्निकपदार्थाभ्युपगमोपि स्या त्प्रत्ययस्योभयत्र साम्यात्। नच प्रबोधकाले स्वाप्निकपदार्थानां बाधदर्शना त्तदानीमर्थसद्भावोपपत्ति विरहा च्च तेषांमिथ्यात्वेऽपि प्रबोधकाले जायमानस्य स्तम्भादिप्रत्ययस्य तद्वैपरीत्या न्न मिथ्यात्वमिति वाच्यम् प्रबोध काले प्रबोधकालिकप्रत्ययानामिव स्वप्नकाले तादृशप्रत्ययानामपि बाधदर्शनाभावात्। प्रबोधकाले

स्वाप्निकप्रत्ययबाधनन्तु स्वप्नदशायां प्रबोधकालिकप्रत्ययबाधेन समम् नच तथार्थसद्भावोपपत्तिविरहात्स्वाप्निकप्रत्ययस्य मिथ्यात्वम् । प्रबोधकालेपि अर्थसद्भावोपपादकप्रमाणविरहेण दोषसाम्यात् कात्स्न्यैकदेशवृत्तिविकल्पादिपर्यनुयोगेनावयवातिरिक्तावयविनोविरहेण परमाणुपुञ्जात्मकस्य प्रत्यक्षविषयत्वासम्भवेन च तदुपपादकप्रमाणाभावात् ज्ञानस्यान्तरस्थत्वेन विषयाणां च बाह्यतया तयोः सम्बन्धाभावेन ग्राह्यग्राहकभावासम्भवात् ज्ञानस्य स्वाकारमात्रग्राहित्वनियमा च्च नच बाह्यार्थस्वीकाराभावे तद्विषयकव्यवहारानुपपत्तिः स्वप्नादिविषयव्यवहारवदेव तदुपपत्तेः विषयसद्भावेऽपि तदज्ञाने तद्व्यवहारो नदृश्यते तदभावेऽपि तद्ज्ञाने व्यवहारो दृश्यत इति अन्वयव्यतिरेकाभ्यां ज्ञानस्यैव व्यवहारहेतुत्वमङ्गीक्रियते नार्थस्या सम्भवात् । अत एवातीतानागतवस्तुविषयकव्यवहारः संगच्छते अन्यथा व्यवहारसमये विषयाणामसत्वा त्तद्व्य-

वहारो न स्यात् नचातीतानागतानां कदाचित्स-
त्वस्वीकारेण तद्व्यवहारः सम्भवति सर्वदाबाह्या-
र्थास्वीकारे तु खपुष्पादिव त्तद्व्यवहारो नैव स्या-
दिति वाच्यम् । व्यवहारदशायां विषयासद्भाव-
स्योभयत्रसाम्येन कालान्तरेऽर्थसत्वप्रयुक्तवैलक्ष-
ण्यस्य प्रकृते अकिंचित्करत्वात् । नच बाह्यवि-
षयभेदानुपगमे ज्ञानभेदएव नस्या द्विषयभेद-
स्यैव ज्ञानभेदनियामकत्वादन्यथैकविषयेऽपि
ज्ञानभेदापत्तिरिति वाच्यम् । स्वप्नविज्ञानभेद-
वद्बिनापि बाह्यविषय मनादिवासनाधीनविचित्र-
ज्ञानशक्तिभेदादेव तद्भेदोपपत्तेः । नचा नुभू-
तानामेव बाह्यविषयाणां निद्रादिदोषवशेन स्व-
प्नेऽन्यथाभानमिति विषयभेदप्रयुक्तस्यैव ज्ञान-
भेदस्य तत्रापि स्वीकार इति वाच्यम् । अननु-
भूतानामपि स्वशिरश्छेदनादीनां स्वप्नेभानद-
र्शना दनुभूतबाह्यार्थस्यैव स्वप्ने भानमिति निय-
मानंगीकारात् । जन्मान्तरानुभूतस्वशिरश्छेदना-
दीनामेव स्वप्नेभानं नाननुभूतानामिति वचन

न्तु अतित्रपाकरम् । तथासति जन्मान्तरानुभूत-
जात्यादीनामपि स्मरणापत्तेः । नच वाह्यार्थभे-
दानंगीकारे ज्ञाननिष्ठशक्तिभेदनियामकवास-
नाभेद एव दुर्घट इतिवाच्यम् पूर्वपूर्ववासनाभे-
दस्योत्तरोत्तरज्ञानशक्तिभेदनियामकत्वोपगमात्
नचेयमनवस्था क्षतिकरी वीजाङ्कुरवदेतस्या
अदोषत्वात् । नच वाह्यार्थस्येव प्रत्ययस्यापि
असत्वमेवास्तु किन्तदीयस्वत्वस्वीकाराभिनिवे-
शेनेति वाच्यम् । सर्वव्यवहारविलोपापत्या जग-
दान्ध्यप्रसंगादित्यर्थस्य सांवृत्तिकं सत्वमभ्युपे-
यते तथाचोक्तं वाह्यैः पररूपं स्वरूपेण यया
सन्नियते धियेति । वाह्यार्थस्य असद्भावस्व-
रूपं स्वरूपेण पारमार्थिकसत्वेन संव्रियते आ-
च्छाद्यते इति असन्नपि वाह्यार्थः विज्ञानेन तद-
सत्वसंवरणात् सन्निवोपलभ्यते एवंच सत्वं
द्विविधं पारमार्थिकसत्वं सांवृत्तिकसत्वं च आद्यं
विज्ञाने एव द्वितीयमर्थे इति अर्थस्यात्यन्तासत
एव सर्वत्रभानात् । सर्वज्ञानानां मिथ्यात्वमिति

द्दोषवाधकज्ञानयोरेव मिथ्यात्वनिर्णायक
रयुक्ता एवं चोदना धर्मे प्रमाणमन्यद्प्र
तत्संप्रयोगजं प्रत्यक्षमन्यसंप्रयोगजमा
ग्निहोत्रादि पुण्यं तत्फलं स्वर्गादि सुरा
पापं तत्फलं दुखं विधेः प्रवर्त्तनमर्थः अर्थ
प्ररोचनमर्थः स्मृत्याचारयोः प्रामाण्याप्र
विचारः कारीर्य्यादीनामैहिकफलत्वं दर्श
सादीनामामुष्मिकफलत्वमित्यादि सर्वो
चारः निष्फलः सर्वविधीनामप्रामाण्य
प्राहु स्तन्मतं दूषयितुमुपन्यस्यति ननु
र्वेति ।

भा० ननु सर्व एव निरालम्बनः
वत् प्रत्ययः प्रत्ययस्य हि निरालम्ब
ह्यभाव उपलक्षितः स्वप्ने जाग्र
स्तम्भ इति वा कुड्य इति वा प्रत्यय
भवति तस्मात् सोपि निरालम्बनः ।

निरालम्बनः वाह्यार्थशून्यः दृष्टान्तमाह स्वप्नइति निगमयति तस्मादिति तथाचायं प्रयोगः सर्वोऽपि प्रबोधकालिकः प्रत्ययोनिरालम्बनः प्रत्ययत्वात् स्वाप्निकप्रत्ययवत् प्रत्ययश्चासौ तस्मान्निरालम्बन इति। ननु तन्मते निखिलप्रत्ययस्य निरालम्बनत्वमिष्टम् जाग्रतोपि स्तम्भ इति भाष्येण प्रबोधकालिकप्रत्ययस्यैव पक्षता प्रतीयते तदयुक्तमितिचेन्न निखिलप्रत्ययस्य पक्षीकरणे पक्षतावच्छेदकसामानाधिकरण्येनानुमितौ स्वप्नेसिद्धसाधनता अवच्छेदकावच्छेदेनानुमितौ दृष्टान्ताभावः एवशब्दोपादानवैयर्थ्यं च स्यात् स्वान्वयिप्रतियोगिव्यवच्छेदकत्वादेवशब्दस्य स्वं एवशब्द स्तदन्वयि सर्वार्थसाकल्यं तत्प्रतियोगिवैकल्यं तद्व्यवच्छेदबोधनं विफलं सर्वशब्देनैव तद्बोधनात्। जाग्रत्प्रत्ययस्यैव पक्षीकरणे तु जाग्रत्प्रत्ययपरिग्रहार्थ एव शब्दः स्वाप्निकप्रत्ययस्य व्यवच्छेदकः एवं च यः कश्चिद् जाग्रत्प्रत्यय इत्यर्थो माभूत् किन्तु

सर्व एव जाग्रत्प्रत्यय इति लाभाय सर्वश्च
च तत्रत्य एवशब्दः सर्वशब्दस्य जाग्रत्प्र
व्यवस्थापयति तदेतत् स्तम्भादीति भाष्ये
टीकृतम् शुक्तिरजतादिजाग्रत्प्रत्ययस्य मि
स्वीकारात् सिद्धसाधनमिति सर्वशब्दोपाद
स्तम्भादिप्रत्ययस्य मिथ्यात्वानङ्गीकारा न
साधनमिति भावः निरालम्बनमित्यनेन
शून्यत्वं विवक्षितं अन्यथा बौद्धमते वि
स्वांशविषयकत्वस्वीकारेण सर्वथा निरालम्ब
भावाद्विरोधः स्यादिति नचास्य भाष्यस्य
नुमाननिर्देशपरत्वेन व्याख्यानमयुक्त मत्र
निर्देशादिति वाच्यम्। पंचम्यन्तेनैव हेतु
कार्य इति नियमाभावेन प्रत्ययस्य हीति
स्वप्ने निरालम्बनत्वप्रत्ययत्वयोर्व्याप्तिं
जाग्रतोपीति भाष्येणोदाहरणोपदर्शितव्या
शिष्टप्रत्ययत्वस्य जाग्रत्प्रत्यये उपसंहारा
त्वस्य स्पष्टमेव हेतुत्वबोधनात्। नच हेतो
व्यावृत्तत्वबोधनार्थं यन्न निरालम्बनं न

स्यय इति व्यतिरेकोदाहरणमपि आवश्यकत्वा त्प्रदर्शयितुं युक्तमिति किमर्थं तदुपेक्षितम्। विज्ञानवादिनां तदतिरिक्तवस्तुनोऽभावेन विपक्षवृत्तित्वशङ्कायाः स्वतएवानुत्पत्या तन्निराकरणाय व्यतिरेकोदाहरणप्रदर्शनस्यानावश्यकत्वादिति। उत्तरमाह—

भा० उच्यते स्तम्भ इति जाग्रतो बुद्धिः सुपरिनिश्चिता कथं विपर्यसिष्यतीति स्वप्नेऽप्येवमेव सुपरिनिश्चिता आसीत् प्राक् प्रबोधनात् न तत्र कश्चिद् विशेष इति।

अत्रोच्यते इति सुपरिनिश्चिता बाधकप्रत्ययरहिता तथाच अबाधितबाह्यार्थविषयकप्रत्ययत्वादिप्रतीतिः बाह्यार्थं सुपरिनिश्चितं व्यवस्थापयन्ती तद्विरुद्धं निरालम्बनत्वानुमानं बाधते वह्नौ शैत्यानुमानवदिति न जाग्रत्प्रत्ययस्य मिथ्यात्वं यथाशुक्तिशकलादाविदं रजतमिति प्रत्ययस्य

नेदं रजतमिति बाधकप्रत्ययेन मिथ्यात्वमेवं स्त
म्भादिप्रत्ययस्य नायं स्तम्भादिरिति बाधकप्रत्य
यादर्शनेन न मिथ्यात्वमिति स्वाप्निकप्रत्ययानु
रोधेन सुपरिनिश्चितस्य जाग्रत्प्रत्ययस्य मि
थ्यात्वानुमानं कालात्ययापदिष्टमेवेति भावः
ननु सांवृत्तिकसत्वमादायैव बाह्यार्थसत्वावगा
हिप्रत्यक्षाद्युपपद्यमानं पारमार्थिकसत्वाभावतात्प
र्येण बाह्यार्थसत्वाभावानुमानं बाधितुं नोत्सहे
इति वाच्यम्। सत्यस्य परमार्थवाचकत्वेन मि
थ्यापर्यायसांवृत्तिकशब्देन सामानाधिकरण्या
संभवात्। यदि चैकं सत्यत्वं पारमार्थिके सां
वृत्तिके च स्यात्तदा एवं सत्यभेदः वक्तुं शक्ये
तापि। सांवृत्तिकस्य मिथ्यात्वेन तत्र सत्यत्वास
म्भवात् यथा वृक्षत्वमेकं सिंहवृक्षत्वयो र्नानु
गतमिति तेन तद्द्वैविध्यप्रतिपादनमयुक्तं तथ
सत्यत्वमपि मृषापरमार्थयो र्नानुगतमिति सत्य
त्वेन मृषापरमार्थभेदोपपादनमपि तेषां लोकव
ञ्चनार्थमेवेति। नच स्तम्भोयमित्यादि प्रत्यय

स्तम्भादिविषयं गृह्णातीत्यविवादम् सच विषयः वाह्यो वा ज्ञानाकारोवेति विशिष्य नाभिनिवेशः तथा च स्वाकारमात्रग्राहितयोपपद्यमानं प्रत्यक्षादि अविरोधितया न बाह्यार्थसत्वाभावग्राहिणो ज्ञानस्य बाधाय प्रभवतीति वाच्यम् । स्वाकारग्राहित्वासम्भवे बाह्यार्थसत्वग्राहित्वस्यैव वक्तव्यतया तदसत्वग्राहिज्ञानविरोधस्य स्पष्टत्वात् । नहि अयं स्तम्भ इत्यादिप्रत्ययः स्वाकारं गृह्णाति तथासति अहं स्तभ इति प्रत्ययः स्यान्नत्वयं स्तम्भ इति बाह्यार्थग्राहित्वमेव तस्य वाच्यम् इति तदसत्वग्राहिज्ञानविरोधः स्पष्ट इति भावः । किंच स्तम्भादिप्रत्ययो निरालम्बनः प्रत्ययत्वादित्यनुमाने स्तम्भादिप्रत्ययस्य धर्मिणः निरालम्बनत्वरूपधर्मस्य च ग्राहकज्ञाने धर्मिधर्मोभयविषयकत्वरूपालम्बनत्वं स्वीक्रियते नवा आद्येनिरालम्बनत्वप्रतिज्ञाविरोधः । अन्ते अप्रसिद्धविशेषणत्वमप्रसिद्धविशेष्यत्वंचेति कुतो निरालम्बनत्वानुमानम् नहि अज्ञातस्य साध्यस्य

अज्ञाते धर्मिणि क्वचिदनुमानं दृष्ट
कस्यापीति। अपि च एतादृशवाक्य
गे वक्तुः सम्बोध्यस्य च प्रत्ययनिरालम्बन
विशेष्यविशेषणयोः यज्ज्ञानं जायते तस्य
लम्बनत्वे स्ववाग्विरोधः विशेष्यविशेष
प्रत्ययनिरालम्बनत्वयो र्भेदाप्रतिभासे वि
विशेषणभावानुपपत्तिः अभेदे तयोरभावात
भानं त्वसम्भवि प्रत्ययस्य निरालम्बत्वात्
ग्राहकत्वे सालम्बनत्वापत्तेरिति प्रतिज्ञात
त्ययनिरालम्बनत्वस्य निरूपणमेवाशक्य
न निरालम्बनत्वं नाम किञ्चिद्वस्तु वोद्धुम
अवस्तुत्वेन वोद्धुमनर्हतया परस्मै किं नि
म्बत्वेन वोधयसि कथं वा त्वमेव बुध्यसे
यित्वा तद्बोधनमपि न असतः कल्पनानुप
ज्ञानविषयत्वस्य तुच्छेऽसम्भवात् असतो
वस्य ज्ञानविषयत्वं दृष्टमिति चेन्न तस्य व
नाङ्गीकारादेतच्चाग्रे निरूपयिष्यते किंच
यपदस्य प्रतीतिः प्रत्यय इतिव्युत्पत्या भ

कत्वम् प्रतीयते इतिव्युत्पत्याकर्मार्थकत्वं वा प्रत्येतीतिव्युत्पत्याकर्त्रर्थकत्वं वा प्रतीयतेऽनेनेति व्युत्पत्त्या करणार्थकत्व म्वा मन्यते नाद्यः भाव-व्युत्पन्नप्रत्ययस्योच्चारणमात्रेणैवार्थान्तरविषयक प्रकाशस्वभावताप्रतीत्या तद्विरुद्धनिरालम्बनत्व-रूपनिर्विषयकत्वप्रतिपादने स्ववाग्विरोधापत्तेः। न द्वितीयः प्रत्याख्यापरपर्यायस्य प्रत्ययस्य घटा-दिवदर्थप्रकाशकत्वानङ्गीकारेण तस्य निरालम्ब-नत्वसाधनेसिद्धसाधनत्वप्रसंगात्। न तृतीयच-तुर्थौ धर्मिधर्मप्रतिपादकयोः प्रत्ययसालम्बनत्व-पदयो रपिस्वार्थप्रतिपादनक्रियायां विवक्षाभेदेन कर्तृत्वकरणत्वसम्भवेन निरालम्बनत्वापत्तेः। शब्द-स्य निरालम्बनत्वमभिधेयशून्यत्व मेवेतिभङ्गय-न्तरेण पक्षस्यैवाभावः प्रतिज्ञातः स्यात् किं चात्मसमवेतप्रत्ययस्य निरालम्बनत्वं साध्यते उतातिरिक्तस्य नाद्य स्त्वन्मते विज्ञानातिरिक्त-स्यात्मनोऽभावेनाप्रसिद्धविशेष्यत्वापत्तेः। नान्त्यः आत्मसमवेतातिरिक्तप्रत्ययानङ्गीकारेणास्मन्मते-

ऽसिद्धविशेष्यत्वापत्तेरिति नन्वेवं शब्दोऽनित्य इत्यादावपि किमाकाशगुणः शब्द किम्वा वायुगुण इतिचोद्यस्य सम्भवेन तत्रापि अप्रसिद्धविशेष्यत्वं स्यात्। यदिचाकाशगुणत्वादिरूपविशेषधर्मेण न शब्दस्य पक्षत्वं किन्तु शब्दवाच्यत्वरूपविशेषधर्मेण तदुभयं च वादिप्रतिवादिनोः प्रसिद्धमेवेति नाप्रसिद्धविशेष्यत्वं तर्हि अत्रापि नात्मसमवेतत्वरूपविशेषधर्मेण प्रत्ययस्य पक्षीकरणं किन्तु प्रत्ययवाच्यत्वरूपसामान्यधर्मेणोभयप्रसिद्धेनेति तुल्यमेवेति चेन्न त्वन्मते वाह्यभेदाभावेनाभिमतप्रत्ययविशेषातिरिक्तसामान्याभावादित्यलं धर्मिदोषोपपादनेन सिषाधयिषितो निरालम्बनत्वादिरूपो धर्मोऽपि कीदृश इति विचार्यताम्। निरालम्बनत्वं किन्तावत् सर्वथाविषयशून्यत्वं उत येन केन चित्प्रकारेणाभासमानत्वं विवक्षितम् नाद्यः निर्विषयकज्ञानासम्भवेन सर्वथाविषयशून्यत्वस्य क्वाचिदपिज्ञानेऽप्रसिद्धया तद्रूपनिरालम्बनत्वसाधने अप्रसिद्धविशेषणः पक्ष

स्स्यात्। दृष्टान्तस्य साध्यवैकल्यं च स्वाप्निकज्ञानेऽपि देशकालान्तरदृष्टस्य कालान्तरे देशान्तरे तत्संबन्धित्वेनानन्यथाभान मितिनसर्वथाविषयशून्यत्वं। नचाननुभूतस्य स्वशिरच्छेदनादेः स्वप्ने भानं अजादेः शिरश्छेदनं दृष्टमिति तस्यैव स्वसंबन्धित्वेन तत्रभानांगीकारात्। न द्वितीयः रसज्ञानस्य रसालम्बनतया रूपाद्यालम्बनत्वाभावेन सिद्धसाधनत्वापातात्। अथ अर्थानुरूपबुद्धयाकारस्वग्राह्यरूपालम्बनशून्यत्वमुच्यते तर्हि स्वाभ्युपगमविरोधः। यदि तु बाह्यपदार्थान् नालम्बते बुद्धिरिति बाह्यग्राह्यालम्बनशून्यत्वं सिषाधयिषितं तत्रापि बाह्यत्वेन स्तम्भाद्यनालम्बनत्वं यदिबुद्धौ विवक्षितं तदासिद्धसाधनं। अयं स्तम्भ इत्यादिप्रतीतेः स्वरूपेण स्तम्भाद्यालम्बनत्वं न बाह्यत्वेन अयं स्तम्भ इति प्रतीतेरयंबाह्य इत्याकारत्वाभावेन तेन रूपेण तदग्रहस्य तत्र सत्वात्। स्तम्भादिस्वरूपेणानालम्बनत्वन्तु अनुभवविरुद्धम्।अयं स्तम्भ इति बुद्धौ स्तम्भालं-

वनतायाः सर्वानुभवसिद्धत्वात् । ननु स्तम्भादि-
प्रत्ययस्य वाह्यत्वेन स्तम्भाद्यनालम्बनत्वं नोच्यते
येन वाह्य इत्येवमग्रहणात्सिद्धसाधनं स्यात्
किन्तु वस्तुतो योवाह्यः स्तम्भादि स्तदनालंव-
नत्वं साध्यते इति क्वासिद्धसाधनमिति वाच्यम् ।
वाह्यपदार्थमनभ्युपगच्छतां विशिष्टसाधने भवता
मप्रसिद्धविशेषणपक्षत्वापत्तेः ननु पक्षविशेषणी-
भूतंयन्निरालम्बनत्वंतत्रवाह्यार्थोविशेषणमितिवा-
ह्यार्थस्याप्रसिद्धावपि साक्षा त्पक्षविशेषणनिराल-
म्बनत्वस्य प्रसिद्ध्या नाप्रसिद्धविशेषणत्वं पक्ष-
स्येति वाच्यम् यथाविशेषणाज्ञाने विशिष्टवा-
क्यार्थवोधः श्रोतु र्न जायते इत्यप्रसिद्धविशेष-
णत्वं दोषः तथाविशेषणे यद्विशेषणं तस्याप्य-
ज्ञाने तद्विशेषणविशिष्टस्य विशेषणस्य ज्ञानानु-
दयेन विशिष्टवाक्यार्थवोधाभावाद् विशेषणाप्र-
सिद्धेरिव तद्विशेषणाप्रसिद्धेरपि दूषणत्वात् ।
वाक्यार्थज्ञाने पदार्थज्ञानस्य हेतुतया ग्राह्मवाह्या-
दिविशेषणपदार्थाज्ञाने तादृशविशेषणद्वयविशि-

ष्टप्रत्ययस्वरूपवाक्यार्थज्ञानमशक्यमेवेति भावः। यदि चाऽव्यतिरिक्तानालम्बनत्वं निरालंबनत्वेनाभिप्रेतं तथाच प्रत्ययोऽव्यतिरिक्तानालंबनः प्रत्ययत्वात्स्वाप्निकप्रत्ययवदिति तर्हि अव्यतिरिक्तानालम्बनत्वमित्यत्र पर्युदासः प्रतिषेधो वाभिमतः पक्षद्वयेऽपिसिद्धसाधनम् प्रमेयत्वेन सर्वाऽव्यतिरेकस्य सर्वत्र सत्वेन स्वाकारालम्बनस्यापि प्रत्ययस्याऽव्यतिरिक्तालम्बनत्वेनास्माभिः स्वीकृतत्वात् व्यतिरिक्तं नालम्बते इति प्रतिषेधपक्षेऽपि प्रमेयत्वेन व्यतिरेकस्य क्वचिदपि अप्रसिद्ध्या व्यतिरिक्तानालंबनत्वस्य सर्वसम्मतत्वात् इति आत्यन्तिकव्यतिरेकविवक्षायान्तु प्रमेयत्वादिना अभेदस्य सर्वत्र सत्वेन तदभावादेव तदनालम्बनत्वं प्रत्ययस्येष्टमेवेति पुनः स एव सिद्धसाधनरूपो वेत्ताल इति न किंचिदेतत्। यदि च कथंचिद्भिन्नं नालम्बते इत्यभिप्राय स्तदा नीलमिदमित्याद्यावेकस्मिन्नेव ज्ञाने प्रमाणप्रमेयाकारेण प्रमाणप्रमेयभावोपपा-

दनात् कालपनिकभेदस्य तत्रापिसत्वेन स्वाभ्युप-
गमविरोधः। अथ पूर्वोक्तनिखिलप्रकारासंभवा
न्निरालम्बनबुद्ध्युत्पत्तिमात्रमिष्यते तर्हि इष्यता
मत्र नो न प्रद्वेषः किन्तु बाह्यविषयाऽपताबुद्धि-
रियं मिथ्यैवेति केवलमस्माभिर्वक्तव्यम्। नचेयं
समीचीनेति त्वयापि साधयितुं शक्यते सम्यक्-
त्वस्य स्वाकारातिरिक्तत्वेन सदालंबनत्वाभावात्।
नहि प्रत्ययः स्वातिरिक्तमालम्बते इति भवतां
सिद्धान्तात्। सम्भवेच तत्रैवानैकान्तिको हेतुरिति
किंच प्रत्ययो निरालम्बनः प्रत्ययत्वादित्यनुमाने
चैत्रादिबुद्धीनां निरालंबनत्वं साधयितुं भवता
न शक्यते चैत्रादिबुद्धिवृत्तिनिरालम्बनत्वादेः
त्वदीयनिरालम्बनत्वानुमितिव्यतिरिक्तत्वादिति
निरालम्बनत्वासिद्ध्या त्वगतः प्राप्तं सालम्बनत्व-
मेवेति। यदि च निरालम्बनत्वेन ज्ञानानधिकर-
णत्वं प्रत्ययस्य साध्यते प्रत्ययो निरालंबनः
अर्थान्न जानाति तर्हि सिद्धसाधनमेव शब्दस्या-
चेतनत्वेन ज्ञानानधिकरणत्वस्यास्माभिः स्वीकृत-

त्वादिति। यदि वा बुद्ध्यनुत्पादकत्वं निरालंबनत्वं साध्यते तदा प्रत्ययो निरालंबनः बुद्ध्यनुत्पादक इति तदा धर्मिणः प्रत्ययस्य स्वविषयकज्ञानाजनकत्वोपपत्त्या प्रतिपत्तु ज्ञानाजनने साधनप्रयोगासंगतेः साध्यासिद्धिप्रसंगादिति सर्वं रिक्तम्। अपिच वाक्यार्थभेदाग्रहणे प्रतिपाद्यप्रतिपादकवाच्यवाचकसाध्यसाधनबुद्धेः सालंबनत्वं न स्यात् तद्विना साध्यसाधनादिविवेकाभावा त्केन किं साधयेत्। एवं प्रतिपाद्यपादकयो र्भेदानवगमे कस्मै किं वदेत् गुरुशिष्ययो र्भेदानवगमे शिष्य म्प्रत्युपदेशानुपपत्तिरित्यादि कियत्कथये सर्वोपि लौकिकवैदिकव्यवहारः पूतिकूष्माण्डायितः स्यात्। किंच बाह्यार्थविषया बुद्धिः सत्या बाधरहितत्वात् स्वप्नबुद्धिबाधकजाग्रद्बुद्धिवत्। नच सर्वासां जाग्रद्बुद्धीनां निरालम्बनत्वेन मिथ्यात्वा न्न साधर्म्यदृष्टान्त इति वाच्यम्। त्वदभ्युपगतविज्ञानास्तित्वक्षणिकत्वादिबुद्धीनामेव दृष्टान्तत्वसम्भवात्। अपसिद्धान्तभयेन तासां

त्वया सत्यत्वाङ्गीकारात्। किंच क्षणिकत्वादि
द्धीनां सत्यत्वे ऽत्र वहेनो ऽर्व्यभिचारः। मिथ्या
पक्षस्य प्रत्ययस्य तद्विशेषणाभेदादे श्च बाधः स्य
त्तथा सति अद्वैतवादिनामिव तवापि बन्धमोक्ष
व्यवस्था न स्यादिति तव धर्मदेशना सिकताकू
पवद् विदीर्येत। ननु न ज्ञानमात्रस्य निरालंब
नत्वेन मिथ्यात्वं ब्रूमहे किन्तु सविकल्पकस्यै
निर्विकल्पकस्य प्रामाण्याङ्गीकारादिति चेन्न क्ष
णिकत्वसाधनप्रयासवैफल्यापत्तेः निर्विकल्पकज्ञा
नेन तत्साधनासंभवात्। सविकल्पकस्य च मिथ्या
त्वात्। मिथ्याज्ञानस्य वस्तुसाधनाक्षमत्वात्
अन्यथा सर्वत्र सर्वसिद्धिः स्यात् तस्य सर्वत्र सुल
भत्वादतः बाधदर्शनात् स्वप्नबुद्धीनां मिथ्यात्व
जाग्रद्बुद्धीनां च सत्यत्वंबाधादर्शनादित्येव पन्था
युक्तः नच योगिनामेव ज्ञानं जाग्रद्बुद्धिबाधक
मस्तु। अयं स्तम्भ इत्यादिबुद्धिगोचरस्य स्तंभा
देः नैतदेवमितितेषां बाधसंभवेन तदवस्थाय
सर्वेषां पुंसां तथाविधबाधसंभवादिति वाच्यम्

इदानीं बाधानुपलम्भेन योग्यवस्थायां किं भवि-
ष्यतीति निर्णयोभावात् । तदानीमिदमित्थमे-
वेति तेषामपि बुद्धिसंभवेनैकशेषस्य कर्तुमश-
क्यत्वात्। तज्ज्ञानस्य जाग्रद्बुद्धिबाधकत्वाभावसा-
धने तु हालिकपरुषोपिदृष्टान्त इत्यबाधकत्वमेव
तज्ज्ञानस्य युक्तमिति दिक् । प्रत्ययत्वादिति हेतु
रपि विचारमर्हति । किं जाग्रत्प्रत्ययत्वं हेतुरुच्यते
उत स्वप्नप्रत्ययत्वमथवोभयानुगतं प्रत्ययत्वसा-
मान्यं आद्ये हेतोः पक्षमात्रवृत्तितया ऽसाधार-
णयापत्तिः द्वितीये हेतोरपक्षधर्मतया स्वरूपासिद्धिः
अन्त्ये सर्वप्रत्ययानुगतं सामान्यमावयोरसिद्धमे-
वेति हेत्वसिद्धिः । जातिव्यक्त्यो र्भेदाभेदस्य
भवद्भिरनङ्गीकारात् । अत्यन्तभेदस्तु आवयो-
रसिद्ध इति। ननु माभूत्सामान्यमीदृक् सारूप्या-
न्यनिवृत्तिरूपं तु तदिष्यते एव तत एव च जाति
निबन्धननिखिलव्यवहारोपपत्तौ भावभूताति-
रिक्तसामान्यकल्पनायां प्रमाणविरहादिति चेन्न
जातिस्वीकारे विना सादृश्यस्यैव दुर्निरूपत्वापत्ते

रेतच्चाग्रे वक्ष्यते। नचैवं कस्यचिदपिज्ञानस्य निरालंबनत्वानङ्गीकारे लोकविरोधः स्यात् लोके हि शुक्तिरजतज्ञानस्य निरालम्बनत्वेन व्यवहार-दर्शनादिति वाच्यम्। प्रकारान्तरेणार्थावगाहिनो ज्ञानस्यैव निरालम्बनत्वेन लोकेऽव्यवहारात्। यथा शुक्तिशकले इदं रजतमितिज्ञानं शुक्तिशकलत्वेन विद्यमानं रजतत्वेन गृह्णात् निरालंबनं कथ्यते नतु स्वाकारमात्रग्राहित्वेन तादृशव्यवहारस्य क्व-चिदप्यदर्शनात् एवमिह घटो नास्ति घटो न पट इत्यभावग्राहिज्ञानं प्रकारान्तरेण भावमेवा-वगाहते भावान्तरभावो हि कयाचित्तु व्यपेक्ष-येति सिद्धान्तात्। नत्वभावाख्यं तुच्छं नामेति भ्रान्तिज्ञानमभावज्ञानं चोभयमन्यथावलम्बनमर्थं अन्यथा गृह्णात्निरालम्बनत्वेन व्यपदिश्यते इति न लोकविरोधः। विस्तरस्तु श्लोकवार्तिके द्रष्टव्यः एवं च यत्रस्वाप्निकज्ञाने बाधदर्शनं तस्य मिथ्यात्वं यत्र च प्रबोधकाले बाधदर्शनं तत्र जाग्रत्प्रत्ययस्य सत्यत्वमित्यभिप्रायेणोक्तं भाष्ये

सुपरिनिश्चितेति ननु यथाप्रबोधकाले बाधादर्श-
नात्तात्कालिकप्रत्ययस्य सत्यत्वमेवंस्वाप्निकप्र-
त्ययस्यापि तदानींबाधादर्शनात्सत्यत्वमेवास्तु स्व-
कालेहि बाधादर्शनमुभयोरविशेषः नच प्रबोधे
स्वप्नप्रत्ययस्य बाधदर्शनं विशेषः प्रबोधप्रत्ययस्य
स्वप्नेपि बाधदर्शनेनाविशेषादित्याशयेनाह न
तत्र कश्चिद्विशेष इति ।

भा० न स्वप्नेविपर्ययदर्शनात् अविपर्यय-
दर्शनाच्चेतरस्मिन् ।

निराकरोति नेति विशेषं दर्शयति स्वप्ने
इति अयंभावः स्वप्ने दृश्यमानो गजः क्षणेन
मृगो भवति पुन वृको भवति पुनरन्य एव
दृश्यते इत्येकस्यासकृदनेकाकारभवन मसम्भ-
वमिति विपर्ययदर्शनात्तज्ज्ञानस्य मिथ्यात्वं
निश्चीयते प्रबोधे तु आजन्मनिरीक्ष्यमाणो
घटः स एवाहर्निशं दृश्यते न जातु चित्परो भव-
तीत्यविपर्ययर्शनादस्य सत्यत्वं यद्वा स्वप्नदशाया-

मपि कदाचिद् विपर्ययो दृश्यते स्वप्नदर्शिन एव इदं स्वप्नदर्शनं ममेति ज्ञाने सति तदानी-मेव तद्बाधः प्रतिसन्धीयत इदं मिथ्या स्वप्ने पश्यामि नानेनोपकारापकारौ मे प्रबोधकाले तु घटादिकं पश्यन् नकदाचिद् विपर्येति इदं मिथ्या नानेन किञ्चिन्नः इति स्वप्नप्रबोधयो बि-शेषदर्शनमस्तीति भावः वस्तुतस्तु स्वाप्निकप्र-त्ययस्य प्रबोधदशायां विपर्य्ययदर्शनात्तस्य मि-थ्यात्वं प्रबोधेतस्यतदर्शनात्सत्यत्व मेवेतभावः प्रत्ययत्वसाधर्म्येण प्रबोधेऽपि विपर्य्ययदर्शनमा शंङ्कते तत्सामान्यादिति ।

भा० तत्सामान्यादितरत्रापि भविष्यती-तिचेत् यदि प्रत्ययत्वा त्स्वप्नप्रत्ययस्य मिथ्याभावः जाग्रत्प्रत्ययस्यापि तथा भवि तुमर्हति अथ प्रतीति स्तथाभावस्य हेतुः

न शक्यते प्रत्ययत्वादयमन्य इति वक्तुम् अन्यत स्तु स्वप्नप्रत्ययस्य मिथ्याभावो विपर्ययादवगतः।

अयमभिप्रायः यथा स्वाप्निकः प्रत्ययो मिथ्या भवति एवं प्रबोधप्रत्ययस्यापिमिथ्यात्वं प्रत्ययत्वेनानुमीयते प्रबोधप्रत्ययो मिथ्या प्रत्ययत्वा त्स्वप्नप्रत्ययवदित्यनुमानेन मिथ्यात्वनिर्णये बाधोपि कदाचि त्स्याद्देहात्मबाधवत् नहि तात्कालिकबाधस्यैव मिथ्यात्वनिर्णायकत्वं स्वीकर्तुमुचितं तथासति शुक्ताविदं रजतमितिज्ञानस्य तदानीं बाधाभावेन सत्यत्वापत्ते रेवंदेहात्मविभ्रमादेरपोति कालान्तरबाधदर्शनमपि तन्निर्णायकमेवंच यथास्वप्ने कालान्तरबाधदर्शनं तथा प्रबोधेऽपि स्यादत्र बाधो न दृश्यते इति तुअसर्वज्ञै दुर्ज्ञेयमिति समाधत्ते यदीति स्यादेवं यदि प्रत्ययत्वं मिथ्या-

त्वप्रयोजकं स्यात् तदा प्रत्ययत्वाधीनं मिथ्यात्वं स्वप्नप्रत्ययस्येव प्रबोधप्रत्ययस्यापि भवेदेव तत्तु नस्वीक्रियते किन्तु अन्यदेव किंचि त्प्रयोजकं तच्च स्वप्नेऽस्ति न प्रबोधे इति भावः ननु तर्हि प्रत्ययस्वरूपमेवास्तु तस्यप्रयोजकमितिप्रत्यय-स्वभावाधीनंमिथ्यात्वं स्वप्नप्रत्ययस्येव प्रबोधप्रत्य-यस्यापि अविशिष्टं तर्हि प्रबोधप्रत्ययः प्रत्ययत्वा दन्यः अर्था त्प्रत्यय एव न भवति येन प्रत्ययस्व भावाधीनं मिथ्यात्वं तत्रेवात्र नस्या त्किन्तु अ-यमपि प्रत्यय एवेति तद्वदस्यापि मिथ्यात्वमेवे-त्याह अथ प्रतीतिरिति उत्तर माह अन्यत इति इति एवं च मिथ्यात्वं न प्रत्ययत्वाधीनं न वा प्रत्ययस्वभावाधीनं किन्तु दोषाधीनं दोष-ज्ञानं क्वचिद्विपर्ययात् क्वचिदन्यतः प्रकृते स्वप्नज्ञानस्य मिथ्यात्वे प्रयोजको दोषो निद्रा तस्या दोषत्वं विपर्ययादवगम्यते प्रबोधकाले विपर्ययदर्शना त्स्वप्नप्रत्ययमिथ्यात्वप्रयोजको दोषो निद्रेति गम्यते दोषान्तरस्यानुपस्थितत्वा

दुपस्थितत्वाच्चैतस्याः दोषो हि करणशक्तिं शिथिलीकरोति इन्द्रियान्तरस्य तदानीमुपरतत्वा पारत्वा न्मन एव स्वाप्निकप्रत्ययकारणं तस्य निद्रया दोषेण दौर्बल्यं स्वग्राह्यविषयविषयक-समीचीनज्ञानजननासामर्थ्यम्। तथाच निद्रादो-षदूषितमनसा स्वप्ने मिथ्याज्ञानं जायते प्रबोधे तादृशदोषविरहा त्समीचीनज्ञानं जायते इति न प्रबोधप्रत्ययस्य मिथ्यात्वमिति भावः विपर्यया-न्निद्राया दोषत्वं कदा ज्ञायते इत्यपेक्षाया माह॥

भा० कुत इति चेत्। सनिद्रस्य मनसो-दौर्बल्यान्निद्रा मिथ्याभावस्य हेतुःस्वप्नादौ स्वप्नान्ते च। सुषुप्तस्याभाव एव अचे तयन्नेव हि सुषुप्त इत्युच्यते तस्मा ज्जा ग्रतः प्रत्ययो न मिथ्येति ननु जाग्रतोऽपि करणदोषः स्यात्। यदि स्यात् अवगम्येत

स्वप्नदर्शनकालेऽपि नावगम्यते इति चेत्। तत्र प्रवुद्धो ह्यवगच्छति। निद्राक्रान्तं मे मन आसीदिति।

स्वप्नादौ स्वप्नान्ते चेति एवंच स्वप्ने विपर्ययद्-र्शनाभावेन तदानीं तत्प्रयोजकत्वाज्ञानेऽपि तत्पूर्वं तदुत्तरंच तत्प्रयोजकत्वं तस्या अवगम्यते नन्वे-तावता प्रबन्धेन स्वप्नज्ञानस्य दोषा न्मिथ्यात्वं प्रबोधप्रत्ययस्य तदभावाद् मिथ्यात्वमुपपादितं सौषुप्तज्ञानं न निरूपितं तत्पुनः कीदृशं भवती त्यपेक्षायामाह सुषुप्तस्याभाव इति सति कुड्ये चित्रमिति न्यायेन यदि तदा ज्ञानं स्या त्तदा तन्निरूपणं युज्येत ज्ञानमेव तु तदानीं न जायते इति कस्य सदसन्निरूपणं क्रियेत तदानीं ज्ञानानुत्पत्तौ प्रमाणमाह अचेतयन्निति उपसं-हरति तस्मादिति नन्विन्द्रियाणामतीन्द्रियतया तद्गतदोषाणामप्रत्यक्षतया प्रबोधकाले कथं

तद्व्यतिरेकनिर्णय इत्यभिप्रायेण शङ्कते नन्विति उत्तरमाह यदीति अभावानामनुपलब्धिप्रमाण-गम्यतामाह यदीति यदि स्यादुपलभ्येत नोपल-भ्यते तस्मान्नास्तीत्यनुपलब्ध्या तद्व्यतिरेकनि-र्णयः कर्तुं शक्यत एव। नन्वेवं दोषाभावनि-र्णयः स्वप्ने पि कर्तुं शक्यते तदानीमपि दोषा नोपलभ्यन्ते इत्यदुष्टकारणजन्यत्वात् तज्ज्ञानस्य कथं मिथ्यात्वमित्यभिप्रायेणाह स्वप्नदर्शनेति उत्तरमाह तत्रेति नानुपलब्धिमात्रमभावसाधनं किन्तु योग्यानुपलब्धिः स्वप्नदशायामिन्द्रियस्य दुष्टतया दोषग्रहणसामर्थ्यं नास्तीति तदनुप-लम्भेपि न दोषाभावनिर्णयः। अत एव तमसि घटानुपलम्भेपि न तदभावनिर्णयः तदनुपलब्धे रयोग्यत्वात्। प्रबोधदशायान्तु दोषदर्शनमेव भवतीत्याह तत्रेति एवंच प्रबोधदशायां तत्र दोषदर्शनात्स्वप्नज्ञानस्य मिथ्यात्वं न प्रत्यय-मात्रस्येति भावः।

भा० शून्यस्तु कथम् अर्थज्ञानयोराकार-
भेदं नोपलभामहे ।

शून्यस्तु इति । नन्वत्रविशेष्यानिर्देशात्कः शून्य इत्यपेक्षायां पूर्वप्रकृतप्रत्यय एव सम्बध्यते योग्यतावशात् तथाच प्रत्ययः शून्यः शून्यत्वं पुनरस्य अर्थानालिङ्गितत्वमेव नान्यदसम्भवात् तच्च निरालम्बनत्वानुमाननिराकरणादेव निराकृतमिति पुनरत्रविज्ञानवादिनः प्रत्यवस्थाने कोऽभिप्राय इति चेदयमभिप्रायः यदि प्रत्यक्षस्य बाह्यपदार्थग्रहणसामर्थ्यं स्यात्तदा तद्विरोधान्निरालम्बनत्वानुमानं न स्यात् यदि चास्य स्वाकारग्रहणमात्रसामर्थ्यं स्यात्तदा विषयभेदेन विरोधाभावान्नानुमानबाधकत्वं प्रत्यक्षस्येति प्रत्याशया प्रत्यक्षस्य बाह्यार्थग्रहणे सामर्थ्याभावं दर्शयितुं शून्यवादी प्रत्यवतिष्ठते शून्य स्तु इति नीलमिदमित्यादौ एकमेव नीलाकारं वस्तुप्रतीयते न वस्तुद्वयमिति

सर्वैरनुभूयतेइति नात्र विशिष्य वक्तव्यम् तद् यदि ज्ञानाकारं स्यात् तदा ज्ञानस्य स्वयं प्रकाशतया अस्य प्रकाशनाय प्रकाशकान्तरं नापेक्षितव्यमिति लाघवम्। अर्थाकारत्वे तु तस्य जडतया स्वतः प्रकाशासम्भवेन तस्य प्रकाशनाय प्रकाशकं ज्ञानमपेक्षणीयं स्यादिति वस्तुद्वयकल्पनायां गौरवं स्फुटम्। नचैतावता ज्ञानस्येवार्थस्यापि स्वयं प्रकाशताऽभ्युपेयतामिति वाच्यम्। एकस्यैव स्वयं प्रकाशशीलस्य वस्तुनः स्वीकारेणार्थस्य स्वयं प्रकाशकत्वे ज्ञानपदार्थानङ्गीकारापत्त्या संज्ञामात्रे विवादात् एकमेव स्वयं प्रकाशं वस्तु ज्ञानपदेन अर्थपदेन वा अभिधीयतामिति न वस्तुनि विशेषः ग्राह्यग्राहकयोरैक्याभ्युपगमात् ननु ज्ञानार्थयोः कुतो न विशेषो ज्ञानस्यान्तरत्वं क्षणिकत्वं च अर्थस्य पुनर्बाह्यत्वं स्थिरत्वं चेति विशेष इति चेन्न सति द्वैते बाह्यान्तरभेदसम्भवेनाद्वैते तदभावात्। किमपेक्षया कस्यान्तरत्वं बाह्यत्वं वा स्यात्। पदार्थान्तराभावादितिभावः

क्षणिकत्वमप्यर्थस्यावश्यं स्वीकार्यं अन्यथा अर्थस्य स्वप्रकाशत्वाङ्गीकारा त्सुषुप्तावपि भानप्रसङ्गात्। ननु ग्राह्यग्राहकयो र्भेदानङ्गीकारे एकस्यैव निर्विशेषस्य वस्तुनः कदाचि न्नीलमिदमितिग्राह्याकारेण कदाचिदहमिति ग्राहकाकारेण भानं कथं स्यादिति वाच्यम्। अनादिग्राह्यग्राहकाकारानुभवाहितविविधवासनावशेनैकस्य निर्भेदवस्तुनो ग्राह्यग्राहकाकारेण प्रतीत्युपपत्तेः तथाचोक्तम्। अविभागोपि बुद्ध्यात्मा विपर्यासितदर्शनैः ग्राह्यग्राहकसंवित्तिः भेदवानिव लक्ष्यते तथा परिच्छेदान्तराच्चायंभावो बहिरवस्थितः ज्ञानस्याभेदिनो भेदप्रतिभासो ह्युपप्लवादिति उपप्लवो भ्रान्त्याकारसमारोपात्। नच ज्ञानवैचित्र्या द्वासनावैचित्र्यं वासनावैचित्र्याच्च ज्ञानवैचित्र्यमित्यन्योन्याश्रयः। पूर्वपूर्ववासनाभेदस्योत्तरोत्तरज्ञानभेदे एवं पूर्वपूर्वज्ञानभेदस्योत्तरोत्तरवासनाभेदे हेतुताया अभ्युपगमेन वीजाङ्कुरवदनवस्थाया अदोषत्वात्। यथावास-

नया यज्ज्ञानं जायते तज्ज्ञानस्य तद्वासनाहेतुत्वा नंगीकारात् । अनादित्वा त्संसारस्य प्रथमं ज्ञान-भेदोवा वासनाभेदोवेति पर्यनुयोगावसरोपि न नचार्थकल्पनापेक्षया वासनाकल्पनायां लाघवोभा वः । ममार्थस्येव तव वासनायाः कल्पनीयत्वात् वासनाया ज्ञाननिष्ठशक्तिरूपधर्मस्वरूपतया पदा-र्थकल्पनापेक्षया धर्मिकल्पनातो धर्मकल्पनावर-मिति न्यायेन ज्ञानधर्मवासनाकल्पनाया उचित-त्वादिति वस्तुतस्तु न ज्ञानवासनयो धर्मिधर्म-भावः कल्प्यते अन्यथा पदार्थद्वयकल्पनापत्तेः ज्ञानातिरिक्तवासनास्वीकारे ज्ञानातिरिक्तं न किंचिदिति नः सिद्धान्तो भज्येत किन्तु स्वत एव नीलपीतादिरूपाणि विचित्राणि कार्यकार-णरूपाणि ज्ञानानि अनादिसन्तानरूपेण प्रव-हन्ति न किंचिदपेक्षन्ते इत्येव नः सिद्धान्तः । एवं क्लृप्तार्थकल्पनापेक्षयोभयवादिसम्मतज्ञान-कल्पनैव लघीयसी अर्थकल्पनायामपि ज्ञानकल्प-नाया आवश्यकत्वात् । ज्ञानाकारकल्पनायां तु

तत एव व्यवहाराद्युपपत्ते र्नार्थकल्पनाप्रसंग इति ज्ञानाकार एव नीलादि र्नातिरिक्तः पदार्थ इति । नच नीलादे र्ज्ञानाकारत्वकल्पनं तवाप्यधिकमिति वाच्यम् तत्तद्विषयाकारज्ञानकल्पनाया स्तवाप्यावश्यकत्वात् नहि ज्ञानमात्रं नीलादिविषयविशेषं बोधयति तस्य पीतादिसाधारण्यात् किन्तु नीलाकारं ज्ञानं ज्ञानभेदादेव च विषयभेदो व्यवतिष्ठते नान्यथा ज्ञानभेद श्च तत्तद्विषयाकारभेदादिति विषयविशेषसिद्धये विषयाकारता ज्ञानस्यावश्यिकी । अन्यथा विषयविशेषसिद्धि र्न स्यात् तथाचोक्तं नहि संवित्तिसत्तयैव तद्वेदनायुक्ता तस्याः सर्वत्राविशेषात् । तां सारूप्यमाविश त्सरूपयितु घटयेदिति । तथा तत्रानुभवमात्रेण ज्ञानस्य सदृशात्मनः भाव्यन्ते नात्मना येन प्रतिकर्म विभज्यते इति । यद्यपि ज्ञानानां क्षणिकत्वा त्स्वत एव भेदः । तथापि नासौ विषयविशेषाकारमन्तरा सुज्ञानः नचाज्ञानभेदः विषयविशेषमुपस्थापयति ज्ञानमात्रस्य

निखिलविषयसाधारणयात् । नहि येन केनापि ज्ञानेन नीलाद्यवधारणमपितु नीलाकारेण ज्ञानेनेति सिद्धं नीलादे ज्ञानाकारत्वमिति किंच नीलादि यदिज्ञानाकारो न स्या त्तर्हि नीलादिज्ञानयो र्भेदा न्नीलादिप्रत्यक्षमेव न स्यात् ज्ञानाकारत्वे तु तयोरभेदा त्प्रत्यक्षत्वं सूपपद्यते तथाचैवं प्रयोगः नीलादि नीलसंवेदनाभिन्नं तदुत्पत्तौ संवेद्यमानत्वात् तत्स्वरूपवत् भिन्नत्वेनासंवेद्यमानत्वाद्वा तत्स्वरूपवत् । भेदे संवेद्यता न स्या त्पीतादिवत् । किंच ज्ञानग्राह्यत्वादपि नीलतज्ज्ञानयोरभेदः भेदे तु प्रकाश्यप्रकाशकयोरसंबन्धा न्नीलादिप्रकाश एव न स्यात् असंबद्धस्यापि प्रकाशकत्वे सर्वः सर्वज्ञः स्यात् असंबद्धत्वाविशेषात् नीलादेरिवार्थान्तरस्यापि नीलज्ञानेनैव प्रकाशसम्भवात् । अस्मन्मते तु तादात्म्यमेव प्रकाश्यप्रकाशकयोः संबन्धः स च न सर्वत्रेति न सार्वज्ञापत्तिः । नच तादात्म्यातिरिक्तः ज्ञानार्थयोः कश्चन संबन्धः येन ज्ञानग्राह्यत्वमर्थस्य

मित्यावयोः सम्मतमेव प्रकाश्ये तावद्विमतिः ।
अर्थः प्रकाश्य इति भवन्तः स्वाकारः प्रकाश्य
इति वयम् । तदिदं तावद्विचार्यताम् कस्य प्रका
श्यत्वं घटते प्रकाशकस्य ज्ञानस्योत्पत्तिः अर्थ-
प्रकाशा त्प्रागेव वाच्या अनुत्पन्नस्य प्रकाशकत्वा
संभवात् उत्पन्नस्यापि अग्रहणादशायां प्रकाश-
कत्वं न संभवतीति प्रदीपप्रभावद् गृहीतस्यैव
प्रकाशकत्वमास्थेयम् । तथा च प्रकाशकं ज्ञानं
स्वोत्पत्त्यनन्तरमेव प्रकाशयति अपेक्षणीयान्तरा-
भावात् । यथान्धकारावृतः कुड्यान्तरितो वा घ-
टादिः स्वप्रकाशाय आलोकं प्रकाशकं स्वसंब-
न्धार्थम् अव्यवधानं चापेक्षते नैवं ज्ञानं किंचि-
दपेक्षते स्वप्रकाशत्वाद्व्यवधाना च्च यदि च
तथापि नगृह्येत तर्हि द्वितीयादिक्षणेपि विशे-
षाभावा त्कदापि नगृह्येतानचज्ञानान्तरेण गृह्येत
इति वाच्यम् स्वयंप्रकाशस्य ज्ञानस्य स्वसजाती-
यप्रकाशान्तरापेक्षाविरहात् । नहि प्रदीपः स्वस्व-
रूपप्रकाशनाय प्रदीपान्तरमपेक्षते तथासति

स्यात् । नच हेतुत्वं ग्राह्यत्वं चक्षुरादेरपि ज्ञानहेतुतया ग्राह्यत्वापत्तेः ज्ञानाकारार्पणक्षमत्वं हेतुत्वमिति चेन्न प्रमाणाभावात् नहि नीलादिर्ज्ञाने आकारमर्पयतीत्यत्र किंचित्प्रमाणमस्ति सारूप्यं ग्राह्यमिति चेन्न असंनिहितस्यापि नीलादेः सारूप्यान्नीलज्ञानग्राह्यतापत्तेः अपिच सारूप्यं येन केनचिद्रूपेण विवक्ष्यते सर्वात्मना वा आद्ये क्षणिकत्वेन सर्वेषां सारूप्यात्सर्वविषयाणां ग्राह्यत्वापत्त्या सर्वस्य सार्वज्ञं स्यात् । अन्ते अर्थवद् ज्ञानस्यापि जडत्वापत्तेः । तथाचोक्तं तैरेव एकदेशेन सारूप्ये सर्वः स्यात्सर्ववेदकः सर्वात्मना तु सारूप्ये ज्ञानमज्ञानतां व्रजेदिति सारूप्यतदुत्पत्तिभ्यां ग्राह्यत्वमित्यपि न धारावाहिकज्ञाने पूर्वस्योत्तरज्ञानग्राह्यत्वापत्तेः अतः सर्वा बुद्धयः स्वात्मानमनुभवन्ति नान्यं स्वयमेवाऽनुभूयन्ते न ज्ञानान्तरेण यथा नान्यो नुभाव्यो बुद्ध्यास्ति तस्यानानुभवो परः ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते इति तदिह ज्ञानं प्रकाशक-

अनवस्थापत्तेः। नच ज्ञानस्वरूपप्रकाश एव न भवतीति विवदितव्यम्। ज्ञानस्मरणादर्शनात् नचाननुभूतस्यस्मरणं घटते अपिच ज्ञानग्रहणाय ज्ञानान्तरापेक्षाया मुत्तरोत्तरज्ञानग्रहणायोत्तरोत्तरज्ञानापेक्षाप्रवाहस्याविरामादेकज्ञानग्रहण एव सर्वस्यायुषः क्षयाद् विषयान्तरसंचारो न स्यात्। तथाचोक्तम्। ज्ञानान्तरेणानुभवे हीष्टा- तत्रापिच स्मृतिः विषयान्तरसंचारः तथा न स्या त्स चेष्यते इति। एवं च स्वोत्पत्त्यनन्तरं प्रकाशयद् ज्ञानं स्वाकारमेव नीलादि प्रकाशयति नार्थान्तरमिति नीलादे र्ज्ञानाकारत्वसिद्धिरिति। अपिच ज्ञानपूर्वकस्यैव नीलादेः सर्वत्रोपलम्भा न्नीलादे र्ज्ञानाकारत्वमेव। तथाहि यदि घटो ज्ञानातिरिक्तः स्यात् ज्ञानं विनापि गृह्येत न तु तथा गृह्यते सर्वत्र ज्ञानपूर्वक एवार्थो गृह्यते अर्थस्य ज्ञानाकारत्वानभ्युपगमे अतीतानागतस्थले अर्थस्य तदानीमसत्वा त्तदुपरक्ता धी र्न स्यादिति। ननु ज्ञानपूर्वकार्थभानेऽपि कथं तस्य ज्ञा-

नाकारतेति चेदित्थम् इदं नीलमित्यादौ नीला-
कारं किञ्चिदेकं वस्तु प्रथते स चाकारो ज्ञानस्य
वा अर्थस्यवेति विवेचनायां ज्ञानस्यैवायमिति
निश्चीयते नार्थस्य विप्रकृष्टत्वात् नचागृहीतमेव
ज्ञानं विषयं प्रकाशयति येनार्थाकार एव स्या न्न
ज्ञानाकारः । अत्र केचित् यद्यपि नीलमिदमि-
त्यादौ नीलाकारं वस्तु प्रतीयते तथापि नायं
ज्ञानाकारः किन्तु अर्थाकार एव ज्ञानमाश्रित्य
भासते इति तन्न अर्थगताकारस्य ज्ञानाश्रयणा-
सम्भवात् । नहि गोत्वमश्वमाश्रित्य भासते इत्यत्र
कस्यापि संप्रतिपत्तिरस्ति यत्रासौ भासते तस्य
नायं धर्मः यत्र च न भासते तस्यायं धर्म इत्यत्र
प्रमाणाभावः । नचादर्शे ग्रीवास्थितमुखमिव
अर्थस्थितः आकारो ज्ञाने प्रतिबिम्बते इति
वाच्यम् । प्रमाणाभावात् मूर्तस्यैव मूर्ते प्रति-
बिम्बदर्शनात् अर्थस्य कस्यचि न्मूर्तत्वेऽपि ज्ञा-
नस्य मूर्तत्वाभावात् । शब्दगन्धरसादीनां प्रति-
बिम्बासम्भवाच्च । अथ मास्तु बिम्बप्रतिबिम्ब-

भावः ज्ञनार्थौ तप्तायःपिण्डवदतिसंसृष्टौ इति वह्निगतस्य दाहकत्वादे रयसोवार्थधर्मस्याकारस्य ज्ञाने परस्पराविवेकनिबन्धनोऽध्यास एवेति वाच्यं सर्वस्य जगतः संमोहकल्पनाया अनुचितत्वा त्प्रमाणाभावाच्च बाह्याभ्यन्तरवर्तिनो रर्थज्ञानयो रतिसंसर्गासम्भवाच्च । अन्ये तु नीलाद्याकारो न ज्ञानधर्मः नाप्यर्थधर्मः उभयो र्निराकारत्वात् । किन्तु निराकारयो र्ज्ञानार्थयोः संयोगादाकार उत्पद्यते मधुसर्पिषोः संयोगाद्व विषमिवेति तन्न ज्ञानस्यामूर्तत्वेनार्थस्य च बाह्यतया तप्तायःपिण्डवत्तयोः संयोगासम्भवात् । मूर्तयोरेव संयोगदर्शनात् न च दैशिकसंयोगाभावेऽपि कालिकसंयोग स्तयोः सुलभ इति वाच्यम् । ईदृशसंयोगस्य सर्वत्र सुलभतया एकस्मिन् ज्ञाने निखिलाकारभानापत्तेः । न च ज्ञानसंमुखस्थितस्यैवाकार उपलभ्यते इति नियमः ज्ञानस्य मुखाभावात् । किंच ज्ञाने ऽर्थसंयोगो नियामकाभावा त्सर्वात्मना स्यात् तत श्च तद्गतगन्धादयः पर-

माणवश्चोपलभ्येरन् नियामकाभावात्। स्ववि-
षयत्वेनावस्थानं संसर्ग इत्यपि न विषयत्वसंस-
र्गादाकारोत्पत्तिः आकारोत्पत्तौ उपलभ्यमानत्व-
रूपं विषयत्वमित्यन्योन्याश्रयादिति दिक्।
सौत्रान्तिका स्तु विचित्रज्ञानोदयानुरोधेन नील-
पीतादिविचित्राकारं प्रमेयं सर्वं रुपेयमेव ग्राह्य-
त्वलक्षणं स्वाकारार्पणक्षमत्वे सति हेतुत्वं वाच्य-
म्। यत्प्रमेयं यद्ज्ञानं जनयत्स्वाकारं तत्रार्प-
यति तत्तज्ज्ञानग्राह्यम् इति नग्राह्यत्वलक्षणानि-
रुक्तिरपि। ननु प्रमेयस्य क्षणिकत्वात् ज्ञाने
स्वाकारार्पणानन्तरं विनाशात् कथमुत्तरक्षणव-
र्तिना ज्ञानेन ग्राह्यं तदितिचे त्सत्यम् विषयस्या
तीतत्वेन वर्तमानाकारेण प्रत्यक्षज्ञाने भानमस्य
न भवति अपितु ज्ञानाकार एव तेन रूपेण
प्रथते ज्ञानाकारेण च तदाकारार्पणक्षमो हेतुर
तीतो विषयः कल्प्यते नन्वेव मपि नीलादे र्विष-
यस्य प्रत्यक्षज्ञानेवर्तमानत्वेनावभासमानत्वाभावा
त्प्रत्यक्षत्वं नोपपद्यते इति वाच्यम्। साक्षा

त्साकारविज्ञानजनकत्वस्यैव प्रत्यक्षज्ञाने वर्तमानत्वेन भासमानत्वस्य बाह्यविषयेऽनङ्गीकारात् । यच्च परंपरया ज्ञानजनकं तदनुमेयं यथा वह्निमान् धूमादित्यादौ वह्न्यादिः वह्निस्वलक्षणं धूमस्वलक्षणमित्यादि परंपरया वह्निज्ञानं जायते इति तस्यानुमेयत्वम् यच्च साक्षात्परंपरया वा न ज्ञानजनकं तत् न प्रमेयमिति प्रमाणं द्विविधं प्रत्यक्षमनुमानं च इत श्च नीलादे ज्ञानाकारत्वं स्वप्नादावसत्यपि विषये विविधाकारं ज्ञानं जायते सत्यपिच विषये ऽज्ञानदशायांतदाकारं ज्ञानं न जायते इत्यन्वयव्यतिरेकाभ्यां ज्ञानाकार एव प्रत्यक्षज्ञाने प्रथते न बाह्यः । यत्तु नीलमिदमित्यादौ ज्ञानाकारः अर्थाकार श्चैतदुभयं पृथगेव भासते किन्तु सौसादृश्यात् जलमध्यपतितोदबिन्दुवत् भेदानवगम इति । तन्न तयो र्भेदाग्रहे सादृश्यग्रहासम्भवात् । सादृश्यस्य भेदघटितत्वात् । इदमनेन सदृशमिति सादृश्यग्रहो भेदे ऽवगते युज्यते नान्यथेति । इतरे तु

शुक्तिशकलादौ इदं रजतमितिज्ञानं जायते अत्र भासमानो रजताकारो न पुरोवर्तिनः शुक्तिशक-लस्य भवितुमर्हतीतिज्ञानाकारत्वमेव विषयस्या-स्थेयम् एवं नक्षत्रतारादिष्वपि नपुंसकत्वस्त्रीत्व-पुंस्त्वविपरीतसंख्यादेरर्थधर्मत्वाभावाद् ज्ञाना-कारत्वमेवेष्टव्यम् । अपि चैकस्मिन्नेव वनिताश-रीरे कामिनामियं कमनीया कामिनी वीतरागा-णां विण्मूत्रपुरीषादिसंकुलमस्पृश्यं मांसपिण्डं व्याघ्रादीनां पुनरनुत्तमं भक्ष्यमिदमित्यनेकविध विकल्पो न ग्राह्याकारनिबन्धनः तस्यैकाकार-त्वात् । अनेकाकारत्वे तु सर्वेषामनेकविधोवि-कल्पः स्यात् नचैवं दृश्यते अतः स्ववासनानि-बन्धनमेवैतद् विकल्पत्रयमिति नार्थस्य ज्ञानेऽव-भासः । किन्तु स्वाकारस्येति दिक् इत्याहुः अ-त्रोच्यते एकमेव ज्ञानं ग्राह्यं ग्राहकं चेति य द्भवतोच्यते तत् किं क्रियाकर्माभेदाभिप्रायक मुत कर्मकरणाभेदाभिप्रायकं किम्वा कर्तृकर्मा-भेदाभिप्रायकं तत्र नाद्यः क्रियायां कर्मताऽयव-

हारस्य क्वचिदप्यदर्शनात् । नहि पाकः पच्यते छिदा छिद्यते इति व्यवहारः कस्यापि सचेतसः समीक्ष्यते किन्तु तण्डुलः पच्यत इत्यादीति स्पष्टमेव भेदे। एवं क्रियाकर्मभावः प्रकृते तु भेदाभावा त्तदुभयव्यवहारो ऽसंगत एव। नापि द्वितीयः एकस्यैककर्मकरणभावासम्भवात् । नहि असिधारया सैव छिद्यते नचाङ्गुल्यग्रेण तदेव स्पृश्यते किन्तु ततो र्थान्तरमिति नापि तृतीयः एकक्रियायामेकस्य कर्तृकर्मभावाभावात् क्वच सुशिक्षितोऽपि नटवटुः स्वस्कन्धमारोहति तस्मा-देकत्रज्ञाने ग्राह्यग्राहकभावकल्पना भवतां दृष्ट-विरुद्धत्वादसंगतैव ननु नैकस्य कर्तृकर्मभावो मया प्युच्यते किन्तु ज्ञानं स्वयमेव प्रकाशते न पुनः स्वप्रकाशक्रियायां वस्त्वन्तरमपेक्षते इत्येव ब्रूमः न स्वस्य कर्मत्वमपीति चेन्न प्रकाशक्रि-यायाः प्रकाश्यसापेक्षतया त्वन्मते प्रकाश्यानां नीलपीतादीनामभावात् प्रकाशकत्वानुपपत्तेः नहि दाह्यमन्तरा प्रकाश्यमन्तरा च वह्नि र्दहति

प्रकाशयतीति केनाप्युच्यते स्वस्वरूपस्य प्रकाश्यत्वे तु एकस्यैव कर्तृकर्मभावापत्तिः साचायुक्तेति निरूपितम्। अपि च तथासति अहं नील इतिप्रतीतिः स्यात् इदं नीलमित्याकार स्तु बाह्यपदार्थविषयकप्रत्यक्षस्यैवेति नैकस्यग्राह्यग्राहकभाव इति ननु प्रदीपादिः घटादि प्रकाशयन्नात्मानमपि प्रकाशयति इत्येकस्यैव प्रदीपादेरेकस्यामेव प्रकाशनक्रियायां कर्तृकर्मभावो दृश्यते तद्वद् ज्ञानस्यापि किन्न स्यादिति चेन्न घटादिप्रकाशकत्वस्यैव प्रदीपादावभ्युपगमेन स्वरूपप्रकाशकत्वानङ्गीकारात्। घटादिप्रकाशे इवप्रदीपप्रकाशे आलोकापेक्षाविरहात्। प्रदीपप्रकाश स्तर्हि केन भवति नहि अप्रकाशितस्वस्वरूपः प्रदीपः परं प्रकाशयितुमीष्टे इति चेत्चक्षुरादिनेति गृहाण चक्षुष स्तर्हि केन प्रकाश इतिमावोचः अप्रकाशितस्वस्वरूपस्यैव तस्य विषयप्रत्यक्षजननस्वभावाङ्गीकारात् नच तत्र प्रमाणविरहः अर्थापत्तेरनुमानस्य च तत्र प्रमाणस्य

सत्वात् । नचार्थापत्त्यादेः कथमवगमः अर्थापत्त्यन्तरेणेति नैकस्यैकक्रियापेक्षया कर्तृकर्मभाव इति किमनुरोधेन ज्ञानस्यापि तथा स्यात एतदेवाभिप्रेत्य ज्ञाते त्वनुमानादावावगच्छामीति भाष्यकारेणोक्तम्। नचात्मानं जानामीत्यादावेकस्यां ज्ञानक्रियायामेकस्यैवात्मनः कर्तृकर्मभाव इति भवतामपि कथं संगच्छते इति चेदित्थम् । भेदाभेदवादिनामस्माकं ज्ञानत्वेन ग्राहकत्वं द्रव्यत्वादिना ग्राह्यत्वमित्येकस्याप्यात्मनः धर्मभेदेन भेदा त्तदुभयव्यवस्थोपपत्तेः। नचैवं बाह्यापह्नववादिनां भवतां संभवति ज्ञेयाभावेनौपाधिकभेदस्यापि तत्राभावत्। नचौपाधिकभेदाभ्युपगमेऽपि कर्तृकर्मणोरत्यन्तभेदो नसिद्ध्यतीति वाच्यम् सर्वत्र प्रमेयत्वादिना अभेदसंभवेनात्यन्तभेदस्य कुत्राप्यनङ्गीकारात् । नच ग्राह्यग्राहकभावो भेदे एवेति नियमाभ्युपगमे आत्मवादे आत्मनि चैतद्भवतीतिभाष्येणाहं प्रत्ययस्य प्रत्यगात्मवृत्तित्वोक्ति विरुद्ध्येत इति वाच्यम् । ज्ञानमात्रस्य

ग्राहकत्वायोगेन तद्विशिष्टस्यात्मनो ग्राहकतया द्रव्यत्वादिना च ग्राह्यतयोपाधिभेदेऽपि तादृशोपाधिद्वयविशिष्टस्य कर्तुः कर्मणश्चैक्यादहं प्रत्ययस्य प्रत्यगात्मवृत्तित्वोपपत्तेरिति। किंच यदि ग्राह्यग्राहकयोरभेदः स्यात् तर्हि ग्राह्याकारग्रहणवेलायां ग्राहकाकारोऽप्यनुभूयेत किंवाग्राहकाकारास्फुरणवद् ग्राह्याकारोपि न स्फुरेत् नह्यस्ति सम्भवः सत्यभेदे ग्राह्याकारः स्फुरेन्न ग्राहकाकारः एकस्यैकदा ग्रहणाग्रहणयोर्विरोधात्। एवं ग्राहकानुभवसमये ग्राह्याकारोऽप्यनुभूयेत नवा तद्वदेव ग्राहकाकारोपि नचैवं दृश्यते किन्तु कदाचिद्ग्राह्याकारोऽनुभूयते न ग्राहकाकारः कदाचिच्च ग्राहकाकार एवानुभूयते न ग्राह्याकारः एवमेकानुभवदशायां द्वयोरपिभानं न स्यात् अभेदात् ग्राहकाकारानुभवं विनापि ग्राह्याकारानुभवो भवतीत्येतत्प्रदर्शनाय वहिर्देशसंवद्धः प्रत्यक्षमुपलभ्यते इत्यभिदधता भाष्यकृता ग्राहकाकारात् पृथक् ग्राह्याकारव्यवतिष्ठापयिषया प्रत्यक्षादिप्रमाण-

वेद्यं नीलादि तच्छब्देन निर्दिश्योदाहृतम् स एव प्रत्यक्षादिप्रमाणवेद्यो नीलादिः बहिर्देशसंबद्धो नान्तरः अतोज्ञानाकारादतिरिच्यते इतिभावो-भाष्यकर्तुः। केचित्तु नीलादेरर्थाकारत्वसिद्धये बहिर्देशसंबद्धत्वं हेतुत्वेनाभिप्रेतं भाष्यकृतः। तथा च नीलादिरर्थाकारो बहिर्देशसंबद्धत्वादिति न्यायाकारः। नच बहिर्देशसंबद्धत्वं ज्ञानाकारस्य सम्भवति इति बलादर्थाकार एव नीलादिः सिद्ध्यतीत्याहु; तदयुक्तम् विज्ञानवादिनां बहिर्देशतत्संबन्धयोरभावेन विशिष्टहेतोरेवासिद्धेः। नचस्वमतासिद्धहेतुभावेन साधनेन परो बोधयितुं शक्यते अतिप्रसंगात् तस्मात्पूर्वोक्त एव भाष्यार्थः एवं ग्राह्यज्ञानं बिनापि ग्राहकज्ञानं भवति इत्येतत्प्रदर्शयितुं सत्यं पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायते भवति हि कदाचिदेतत्। यज्ज्ञातो-प्यर्थः सन्नज्ञात इति उच्यते इति वक्ष्यते भाष्य-कृता यथाऽस्मिन्देशे कोपि पुरुषो मया नुभूतः स परमिदानी स्मृतिपथं नायातीति ग्राह्यास्मरणेऽपि

ग्राहकज्ञानस्मरणं भवति तथाच यदिग्राह्यग्राहकयोरभेदः स्या त्तदा ग्राहकस्येव ग्राह्यस्यापि स्मरणं स्यात् किंवा ग्राह्यस्येव ग्राहकस्यापि स्मरणं न स्यात् भवत स्तु एकतरस्य स्मरणास्मरणे इति ग्राह्यग्राहकयो र्भेदः। ननु ग्राहकसद्भावाद् ग्राह्यस्य ग्रहणमस्तु ग्राहकस्य तु ग्राहकान्तराभावा देवाग्रहणमित्येकस्य ग्रहणेऽपरग्रहणापादनमयुक्तम्। नच ग्राहकेण ग्राह्यस्येव ग्राह्येन ग्राहकस्यापि ग्रहणमस्तु इति वाच्यम्। तस्य ग्राह्यस्वभावतया ग्राहक[illegible]योगादिति चे न्न एवं सति ग्राह्यग्राहकभावरूपोभयधर्मव्यवस्थापनासंगतिप्रसंगात्। एवं ग्राहके ग्राह्यस्वभावानभ्युपगमेपि बोध्यम्। अस्तु तर्हि एकस्वभावमेवेति चे न्न ग्राह्यग्राहकयोः [illegible]परसापेक्षतया एकस्यासिद्धौ तदुभयासिद्धिप्रसंगात्। तथा च ज्ञानाभाव एव स्यात्। नच ग्राह्यग्राहकभावयो रुभयत्र सत्वेऽपि सूक्ष्मद्र[illegible]धरसयोरिवोद्भवाभिभवाभ्यामुपलम्भानुपलम्भौस्यातामिति वाच्यम्।

गन्धरूपयो र्भेदादुद्भवाभिभवयोः समर्थनेऽपि प्रकृते भेदाभावेन तदसंभवात्। नच भेदाभेद-वादिन स्तव शब्दनित्यत्वयोरप्यभेदात् शब्दग्रहणेऽपि नित्यत्वादेरिव एकस्य ग्रहणेऽपि अपरस्याग्रहणं ममापि किं न स्यादिति वाच्यम्। मन्मते तयोर्भेदस्यापि स्वीकारात् । अन्यतरग्रहणाग्रहणयो रुपपत्तिः। नचैष प्रकार स्त्वन्मते सम्भवति भेदास्वीकारात्। एकस्य युगपदुद्भवाभिभवकल्पनायाः सम्भवाभावात् नच शब्दनित्यत्वयो र्भेदे प्रमाणविरहः मूर्द्धाभिषिक्तस्य बुद्धिभेदस्यैव प्रमाणत्वात् । देशपरिमाणभेदस्यैव वस्तुभेदप्रयोजकत्वमितिनियमे तु न किंचित्प्रमाणम्। अन्यथा वाच्यत्वप्रमेयत्वादेरभेदापत्तेरिति दिक्। वैभाषिकाः पुनराहुः । सत्यं ग्राह्याद् ग्राहकमतिरिच्यते परन्तु तज्ज्ञानमेव नार्थान्तरं निलादि अक्लृप्तकल्पनापेक्षयोभयवादिसिद्धज्ञानाभ्युपगम एव श्रेयान्। लाघवादिति तदयुक्तं स्वलक्षणातिरिक्तस्य सामान्यस्य तन्मतेऽभावादु-

भयत्र ज्ञानव्यपदेशासंगतेः अथातिरिक्तं सामान्यं स्वीक्रियते तर्हि तदतिरिक्तमनतिरिक्तं वा आद्ये तस्यैव ज्ञानपदार्थतया ग्राह्यग्राहकयोरज्ञानत्वापत्तेः। किंच तत्रापि ग्राह्यग्राहकभावविरहादज्ञानत्व-प्रसंगः। अतिरिक्तसामान्यस्य ग्राह्यग्राहकाभ्यां सम्बन्धे रूपरसादिवदनेकत्वापत्तिः एवं अव्य-तिरेके ग्राह्यग्राहकयो र्भेदा त्तदभिन्नस्य सामा-न्यस्यापि भेदापत्तिः तद्भिन्नाभिन्नस्य तद्भि-न्नत्वनियमात्। ननु न जातिरूपं सामान्यं स्वीक्रियते येन वैशेषिकस्येव ममाप्येते दोषाः स्युः किन्तु सादृश्यरूपमपोहरूपं वा सामान्य-मिहास्ति इत्यपि न विज्ञानातिरिक्तमनिच्छतां भेदघटितसादृश्यस्यापोह्याभावादपोहस्य च निरूपयितुमशक्यत्वात्। एवं च सामान्या-सिद्ध्या ग्राह्यग्राहकयो र्ज्ञानत्वेनैकत्वोपपाद-नमयुक्तम्। अतीतस्य ज्ञानस्य प्रत्यक्षालम्ब-नत्वं च वक्तुमशक्यम्। विद्यमानग्राहित्वा-त्प्रत्यक्षस्य। मास्तु तर्हि अतीतस्यालम्बनत्वं

युगपज्जायमानयोरेव ग्राह्यग्राहकभावो स्तु मैवं मन्मते कारणस्यैव ग्राह्यतया युगपज्जायमानयोः परस्परनिरपेक्षयोः सव्येतरविषाणयोरिव कार्यकारणभावासम्भवात् सिद्धस्य हि कारणत्वमसिद्धस्य च कार्यत्वं नचैकमेकदासिद्धमसिद्धं च भवति विरोधात् इति नग्राह्यग्राहकभाव स्तयोः। अस्मन्मते ग्राहकमेव कारणं ग्राह्यं च कार्यं विषयेन्द्रियसन्निकर्षजन्या हि प्रत्यक्षप्रमितिः तज्जन्यज्ञाततारूपफलसमवायित्वादर्थस्य कर्मत्वं तदेव चग्राह्यत्वं तेन रूपेणार्थस्य कार्यत्वम्। एतस्यां क्रियायां यद्बुद्धेः कारणत्वं तदेव तस्याः कारणत्वं ग्राहकत्वं च एवं च विषयसमवेतस्य ज्ञाततारूपफलस्य तज्जनकबुद्धे श्च पौर्वापर्यसद्भावा त्कार्यकारणभावः सूपपद्यते। त्वन्मते तु युगपज्जायमानयोः ज्ञानयोः पौर्वापर्याभावात् कार्यकारणभाव एव दुर्घटः किंकार्यं किं कारणमित्यविवेक श्च द्वयोरविशेषात् ननु न नियतपूर्ववर्त्तित्वं कारणत्वमस्माभिरुच्यते किंतु

तद्भावभावाऽव्यभिचारित्वं तच्च युगपज्जन्मनोपि भवति तथाचोक्तं प्रत्ययोऽव्यभिचारित्वा दसहेति प्रत्ययः कारणं सहजन्मनोऽ व्यभिचारित्वात् कारणत्वमित्यर्थः इति चेन्न सहजायमानयोरूपरसयोरपि मिथःकार्यकारणभावापत्ते रतः पौर्वापर्यघटितमेव तद्वाच्यम्। नच प्रदीपप्रभायां व्यभिचारः। तत्रापि पूर्वपूर्व प्रभाया उत्तरोत्तरप्रभाहेतुत्वाङ्गीकारात् कालस्यातिसूक्ष्मतया यौगपद्यभ्रम स्तत्र उत्पलपत्रशतव्यतिभेदनवत्। तुलोन्नमनानमनयोः परस्परकार्यकारणभावाभावा त्सकृदुत्पत्तावपि न क्षतिरिति। अस्तु तर्हि पूर्वज्ञानस्योत्तरणज्ञानेन ग्रहणम्। नचातीतस्यप्रत्यक्षालम्बनत्वं नेति पूर्वमेव निराकृतमिति सत्यं निराकृतं किन्तु तदयुक्तम्। पूर्वज्ञानमुत्तरज्ञाने तादृशीं शक्तिमादधाति यथा पूर्वज्ञानमुत्तरस्यालम्बनं भवति स्मरणस्येवानुभवः तथाचोक्तं शक्त्यर्पणा क्रमादिति। अत्रोच्यते अतीतस्य वर्तमानत्वेन ग्रहणे भ्रमत्वापत्तिः। वर्तमानत्वेन

गृह्यमाणस्यार्थस्यातीतत्वमप्रामाणिकं च दृष्टान्तोपि विषमः अनुभवो हि अतीतत्वेन स्मरणस्यालम्बनं न वर्तमानत्वेन स्वप्ने तु अतीतस्य वर्तमानत्वेन ग्रहणमुचितमेव । तस्यभ्रमत्वात् भ्रमत्वं पुनरस्य बाधकज्ञानादवसीयते प्रकृते च बाधादर्शना न्न भ्रमकल्पनेति नातीतस्य वर्तमानत्वेन ग्रहणं युज्यते तथाचैवं प्रयोगो विधेयः अतीतो न प्रत्यक्षविषयः अवर्तमानत्वादनागतवत् । अपिचातीतस्यापि प्रत्यक्षालम्बनत्वे अर्थस्यैवालम्बनत्वमुचितमविशेषादिति सौगतमताविशेषः किंच शक्त्यर्पकमतीतं यद्ज्ञानं तत् किं ग्राह्यैकस्वभावमुतग्राहकैकस्वभावमथवोभयस्वभावम् । आद्ये गृहीतमेव ज्ञानं वासनामर्पयितुमर्हति नागृहीतमिति स्वोत्तरज्ञानोत्पत्तेः प्राग् ग्राह्यैकस्वभावं ज्ञानमगृहीतमेवेत्यनागतज्ञानवन्नोतरत्र वासनार्पणाय प्रभवति शक्त्यर्पणाभावे तु पूर्वविषयत्वेनोत्तरज्ञानं कथमुत्पद्यतापि तथा चायं प्रयोगः अतीतज्ञानम् न वासनार्पकम् अज्ञातत्वादनागतज्ञानवत् सन्ताना-

न्तरवर्तिज्ञानवद्वेति द्वितीये कल्पे ग्राह्यस्वभावत्वा-
नभ्युपगमेन पूर्वज्ञानस्योत्तरज्ञानालम्बनत्वानुपप-
त्तिःग्राह्याभावेन ग्राहकस्याप्यसिद्धिप्रसंगः।नच पू-
र्वज्ञानं ग्राह्यं तस्याप्येवं रीत्या ग्राहकस्वभावत्वात्।
तृतीये कल्पे तु स्वोत्पत्तिवेलायामेव स्वग्रहणा-
पत्तिः। उत्तरज्ञानप्रतीक्षाविरहात्। ननु यथा
त्वन्मते विषयापेक्षया ज्ञानस्य ग्राहकत्वं ज्ञानान्त-
रापेक्षया च ग्राह्यत्वमित्येकस्यैव ज्ञानस्य ग्राह्य-
ग्राहकत्वोभयं स्वीक्रियते तथास्मन्मतेऽपि पूर्व-
ज्ञानापेक्षया ग्राहकत्वमुत्तरज्ञानापेक्षया ग्राह्यत्व-
मिति तदुभयमेकत्र किं न स्यात् कः पुनरत्रावयो
र्विशेष इति चेदयंविशेषः । भवन्मते पूर्वज्ञानमु-
त्तरज्ञाने शक्तिमर्पय्य स्वयमुत्तरस्य विषयो भवति
शक्त्यर्पणं चानाविज्ञातं कर्तुमर्हतीति तज्ज्ञान-
मपेक्ष्यते ज्ञानं च पुनः ग्राहकं विना न ग्राहकं च
न शक्त्यर्पणं विनेति उत्तरस्मिन् शक्त्यर्पणाय
स्वज्ञानमावश्यकमित्युत्पत्तिवेलायामेव स्वग्रहणा-
पत्तिः। साचायुक्तेति दर्शितम् अस्मन्मतेतु न

ज्ञानं स्वस्मिन् वासनां जनयति अपि तु अर्थे अर्थविषयकस्मरणमेव तेन जन्यते इति न स्वोत्पत्तिवेलायां स्वग्रहणापेक्षा एवंच ग्राहकरूपत्वं ग्राह्याकारत्वं च पूर्वज्ञानस्य न सम्भवति किन्तु ग्राह्याकारत्वमेवेति भङ्ग्यन्तरेणार्थएवाभिहित इति एवमुत्तरमपि ज्ञानं ग्राहकस्वभावमुतग्राह्यस्वभावं किंवा उभयस्वभावमिति विकल्प्य निरसनीयमिति। किंच क्षणिकज्ञाने व्यापाराभावात् शक्त्यर्पकत्वमयुक्तम्। अत्रायं प्रयोगः। एकसन्तानपतितानां ज्ञानानां न मिथः कार्यकारणभावः। ज्ञानत्वा त्सन्तानान्तर्वर्तिज्ञानवत्। ग्राह्यग्राहकयोर्भेदे चानुमानम्। रूपं तद्ग्राहकं च मिथोभिन्नं परस्परपरिहारेण परामर्शविषयत्वात् रूपरसवत् ज्ञानं स्वांशं न गृह्णाति नापि स्वांशेन गृह्यते ज्ञानादुत्पद्यमानत्वात्। वासनावत्। ग्राह्यग्राहकशक्तिद्वयनिराकरणाय चेदृशः प्रयोगः। ज्ञानं न द्विशक्तिकं ज्ञानोत्पत्तेः वासनावदिति। नचैवं ज्ञाने इव आत्मनि अपि ग्राह्यग्राहकोभयशक्तिशून्यानु

मानं स्यात्। तथाहि आत्मा न ग्राह्यग्राहकोभय-
शक्तिमान् वस्तुत्वात् घटवदिति वाच्यम् आत्मनि
तदुभयग्राहकमानसप्रत्यक्षविरोधेन तादृशानुमा-
नानुदयात्। ज्ञानस्य तदुभयशक्तौ तु न किंचि
त्प्रमाणमल स्तत्रानुमानं भवत्येवेति तथाच नी-
लादेः ज्ञानाकारत्वे प्रमाणाभावादतिरिक्तत्वसि-
द्धिरेवंचोभयवादिसिद्धत्वात् ज्ञानस्य तस्यैवाकार-
कल्पना युक्ता लाघवमेवंसति भवतीति तदुक्ति
र्हेया प्रमाणसिद्धस्यापलापायोगात्। यदपि ना-
प्रकाशितस्वस्वरूपोर्थं प्रकाशयितुमर्हतीति अर्थ-
ग्रहणात्प्रागेव ज्ञानग्रहणं तदप्यसंगतमेवेन्द्रिया-
दौव्यभिचारात्। निलीनान्येवेन्द्रियाणि अर्थं
प्रकाशन्ति नार्थग्रहणात्प्राक् तेषामुपलम्भ इत्य-
लमतिविस्तरेण प्रकृतमनुसरामः ननु इदं नीलं
कुतः यतो नीलाकारात्रबुद्धि र्नोजायते इति
व्यवहारदर्शनाद्बुद्धेः साकारत्वमेवेति चेन्न बुद्धेः
साकारत्वतात्पर्येणेदृशप्रयोगाभावात्। नहि वक्ता-
रः साकारां बुद्धिमधिगम्य तदाकारमर्थं व्यव-

स्थापयन्ति किन्तु ग्राहकं ज्ञानं यादृशाकारं सम-र्थ्यते तादृशाकारोऽयमिति तात्पर्येण तथोक्तिः। यदपि ज्ञानपूर्वकार्थग्रहणा त्तदाकारत्वं तदपि न ज्ञानस्य तदुपायत्वात्। नहि उपायं परित्यज्य उपेयाधिगतिः क्वचिद्दृष्टा एवं यत्र नीलाकारं ज्ञानं पीताकारं ज्ञानमित्युच्यते तत्रापि न ज्ञानस्य विषयाकारत्वे तात्पर्यं किन्तु तत्राकारपदं विषया र्थकमेवंच नीलविषयकं पीतविषयकं ज्ञानमित्ये-वार्थ इति नार्थो ज्ञानाकारः किन्त्वतिरिक्त एवेति संक्षेपेण विज्ञानवादिमतं तत्खण्डनं च प्रदर्शित मथभाष्यं व्याख्यायते शून्य इति एतद्व्याख्या-तमेवप्रत्ययपदानुवृत्तिप्रदर्शनेन पूर्वम् अत्रापपत्तिं पृच्छतिकुत इति विज्ञानवादी उपपादयति अर्थ इति अयं भावः इदं नीलमित्यादिप्रत्यक्षे नाका-रद्वयं भासते येनैकोबाह्यार्थस्य स्या दपरश्च ज्ञानस्य किन्तु एक एवाकारः स्फुरति सच बाह्यस्य न संभवति बाह्यस्य विप्रकृष्टतया न्तर-ज्ञानसंबन्धायोग्यत्वात्। असंबद्धार्थभाने अति

प्रसंगादुभयवादिसिद्धज्ञानाश्रयणेनैवोपपत्तौ तद् तिरिक्तार्थकल्पनायां गौरवंचेति ज्ञानाकार एव स्फुरति नच तयोरभेदे न स्फुरणमित्याह अर्थं नोपलभामह इति। ज्ञानस्य स्वाकारग्राहित्वा त्प्रत्यक्षत्वं 'अर्थस्यज्ञानाकारार्थकत्वेनोपपत्तोणत्वा-दतीतत्वादसत्याच्च नप्रत्यक्षग्राह्यत्वमित्यभि-प्रायेणाह विज्ञानवादी प्रत्यक्षेति॥

भा० प्रत्यक्षा च नो बुद्धिः अतस्तद्भिन्नमर्थरूपं नाम न किञ्चिदस्तीति पश्यामः। स्यादेतदेवं यद्यर्थाकाराबुद्धिः स्यात्। निराकारातु नो बुद्धिः आकारवान् बाह्योऽर्थः। स हि वहिर्देशसंबद्धः प्रत्यक्षमुपलभ्यते। अर्थविषया हि प्रत्यक्षबुद्धिः न बुद्ध्यन्तरविषया। क्षणिका हिसा न बुद्ध्यन्तरकालमवस्थास्यते इति। उत्पद्यमाने-

वासौ ज्ञायते ज्ञापयति च अर्थान्तरम् प्रदीपवदिति यदुच्येत। तन्न

नः अस्माकं विज्ञानवादिनाम् अर्थरूपं बाह्यं नीलादि न किंचिदस्तीति अर्थस्य जड़त्वेन स्वतः प्रकाशासम्भवात् प्रमाणाधीनसत्ताकत्वमेवेति प्रमाणाभावा न्न तत्सिद्धि रन्यथा सप्तमरसादेरपि स्वीकारापत्तेरिति। पूर्वोक्तरीत्या बुद्धेः साकारत्व निराकरणादिदं नीलमित्यादि प्रत्यक्षे वर्तमानत्वेन भासमान आकारोऽर्थस्यैव न ज्ञानस्य निराकारत्वादित्याह स्यादेतदिति आकारवान् बाह्योऽर्थ इति प्रतिज्ञातस्य समर्थनाय ग्राहकांशाद् विविच्य ग्राह्यांशं दर्शयति स हीति स हि नीलाद्याकारः प्रत्यक्षग्राह्यः बहिर्देशसंबद्धः प्रतीयते न बुद्धिरित्यर्थः। अर्थान्तर न्त्वस्यनिराकृत मितिनेह पुनरुच्यते। यदपि पूर्वज्ञानविषयकत्वमुत्तरज्ञानस्याभिहितं। तदपि न युक्त मित्याह

अर्थविषयेति नबुद्ध्यन्तरविषयेत्यत्र युक्तिमाह क्षणिकाहीति अयं भावः पूर्वज्ञानमुत्तरस्य विषयो न भवितुमर्हति उत्तरज्ञानोत्पत्तिसमये पूर्वज्ञानस्य क्षणिकत्वेनासत्वात् । यदाचातीतं न प्रत्यक्षस्यालम्बनं तदा अर्थएव नीलादिः तदालम्बनमितिबाह्यार्थः सिद्ध्यत्येवेति । उत्पद्यमानैवेति यथाप्रदीपः स्वस्वरूपं प्रकाशयन् घटादि प्रकाशयति एवं ज्ञानमपि तदानीमात्मस्वस्वरूपं प्रकाशयदर्थं प्रकाशयतीति द्वयोरेकदैव भानमित्यर्थोऽस्य भाष्यस्य प्रतीयते स च न युक्तः शून्यवादिनामर्थज्ञानयोरेकदाभानस्याभिमतत्वे ज्ञानवदर्थस्यापि स्वीकारापत्तौ पूर्वपक्षोच्छेदापत्तेः अर्थनिराकरणाय प्रवृत्तानां शून्यवादिनामर्थस्यैव सिद्ध्याऽर्थान्तरत्वापत्तेश्चेति चेन्न यतो नेदं भाष्यं विज्ञानवादिनां स्वपक्षोत्थापनपरं ते स्वमतेन इदं न ब्रुवते किन्तु बाह्यार्थवादिनम्प्रति ब्रुवन्ति प्रत्यक्षोत्पत्तिवेलायां स्वस्वरूपप्रत्यक्षस्य प्रतिबन्धकं किंचिदिच्छन्ति भवन्तो नवा आद्ये

अप्रकाशितस्वस्वरूपः प्रदीप इव कथमर्थं प्रकाशय त्प्रत्यक्षम् । अन्त्ये प्रकाशमान आकारोज्ञानस्यैवास्तु आवश्यकत्वादलमर्थस्वीकारव्यसनेनेत्यर्थाभावः सिद्ध्यतीत्यभिप्रायोऽस्यभाष्यस्येति नासंगतिरिति । पूर्वपक्षं निराकरोति ॥

भा० तन्न नहि अज्ञातेऽर्थे कश्चिद्बुद्धिमुपलभते ज्ञाते तु अनुमानादवगच्छति । तत्र यौगपद्यमनुपपन्नम्

नचेति । अयमभिप्रायः प्रत्यक्षोत्पत्तिवेलायामेतद्ग्रहणप्रतिबन्धकं नकिञ्चिदिति यदुक्तं तत्सत्यम् । किन्तु ग्राहकाभावात्तदा नैतद्गृह्यते एकत्र कर्तृकर्मविरोधेन स्वयं न गृह्यते ग्राहकान्तराभावादन्येनापि नेत्यगृहीतमेव ज्ञानमर्थंप्रकाशयतीन्द्रियवत् । कथं ग्राहकाभावो निश्चीयत इत्यत आह नहीति ज्ञातत्वमेवैतज्ग्राहकं तच्च तदानीं नास्ति व्यतिरेकमुक्त्वा न्वयमाह ज्ञात इति तथाचान्वयव्यतिरेकाभ्यां ज्ञातत्वमेवैत-

ज्ग्राहकमिति निश्चीयते घटेऽवगते पश्चात् घटो विषयतासंबन्धेन ज्ञानवान् ज्ञाततावत्वादित्याद्यनुमानेन ज्ञानं गृह्यत इतिभावः ये तु वाह्यार्थवादिनो वैशेषिका उत्पत्तिसमये एव ज्ञानं गृह्यत इति मन्यन्ते तेषां निराकारस्य ज्ञानस्य प्रत्यक्षत्वासंभवा त्साकारत्वमेव वाच्यं स्यात् तथा सति प्रत्यक्षे भासमानः आकारो ज्ञानस्यैवेत्यर्थसिद्धिरेव न स्यादत उत्पत्तिसमये ज्ञानग्रहणं स्वगृहे अन्तकावाहनमिवानुचितमित्येतदनेन बोध्यते इति ॥

भा० ननु उत्पन्नायामेव वुद्धौ ज्ञातोऽर्थ इत्युच्यते नानुत्पन्नायाम् अतः पूर्वं वुद्धि रुत्पद्यते पश्चाज्ज्ञातोऽर्थः सत्यम् पूर्वं वुद्धिरुत्पद्यते नतु पूर्वं ज्ञायते।

उत्पन्नायामेवेति ननु शून्यवादिनोऽयमाक्षेपो न युज्यते परस्येष्टापादनात्। स्वस्य चा-

निष्टापादनात्। तथाहि पूर्वं बुद्धिरुत्पद्यते पश्चादथ उपलभ्यते इत्येत त्परस्येष्टमेवेति न किंचिदनिष्टमापादितमनेन। स्वस्य तु अत्यन्तं प्रतिकूलं स्वमते वाह्यार्थाभावात्। पश्चादर्थ उपलभ्यते इत्येतदङ्गीकर्तुमनह तथाप्येतदंगीकारे स्वपक्षव्याघातः परपक्षाभ्युपगमश्चेति किंच उत्पद्यमानैवासौ ज्ञायते ज्ञापयति चेत्यादिना ज्ञानज्ञानयो यौगपद्यमभिहितमिह तु पौर्वापर्यमभिधीयते इति स्वपूर्वोक्तिविरोधोपीति चेन्न अत्रापि यौगपद्यस्यैवाभिधानात्। पूर्वं बुद्धिरुत्पद्यते पश्चाद् ज्ञातोर्थ इत्युक्त्या बुद्ध्युत्पत्तिवेलायामेवार्थज्ञानमिष्टमत एव पूर्वं बुद्धेरुत्पत्तिमभिधाय पश्चाद् अर्थोज्ञात इति भूतार्थकप्रत्ययेनार्थज्ञानस्य भूतत्वमुक्तं यदि बुद्ध्युत्पत्तिवेलायामर्थज्ञानं न जायते तदा तदनन्तरमर्थज्ञानस्य भूतत्वं न घटेत इति अर्थज्ञानस्य भूतत्वाभिधानादवगम्यते। बुद्ध्युत्पत्तिवेलायामथज्ञानमिष्टम्। अपि च यदि ज्ञानो-

त्पत्तिसमये अर्थज्ञानं न स्यात्तदा अर्थस्य क्षणिकत्वादुत्तरकाले तदवस्थानाभावात्प्रत्यक्षेण ग्रहणं न स्यात् वर्तमानमात्रग्राहित्वात्प्रत्यक्षस्येति यौगपद्यमिहापि तयोरभिधित्सितमिति न विरोधः। नच यौगपद्यं पूर्वमेवाभिहितमिति पुनस्तदभिधानं व्यर्थमेवेति वाच्यम्। पूर्ववदत्रापि स्वपक्षाभिधाने तात्पर्यविरहात् ज्ञातेत्वनुमानादवगच्छतीति सिद्धान्तिवचनाद् भ्रान्तः शून्यवादी सिद्धान्तिपक्षमन्यथा गृहीत्वाऽऽशङ्कितवान्। ननूत्पन्नायामिति ज्ञानस्योत्पत्तिरुपलब्धिश्च युगपदेवेत्यत्र न कश्चिद्विवादः। विवादभूमिः पुनरियम् तदर्थोपलब्धेः पूर्वं पश्चाद् युगपद्वेति ज्ञाते त्वनुमानादवगच्छतीतिभाष्योक्त्या मीमांसका अर्थज्ञानानन्तरं ज्ञानग्रहणमिच्छन्ति अर्थज्ञानानन्तरं ज्ञानग्रहणं भवतीति श्रुत्वा शून्यवादी भ्रान्तः यदि अर्थज्ञानानन्तरं ज्ञानग्रहणं तर्हि ज्ञानोत्पत्तिरपि ग्रहणोत्पत्तिवदर्थज्ञानानन्तरमेवेष्टा स्यात् तच्चानिष्टमिति ज्ञानोत्पत्तिः अर्थ-

ज्ञाना त्प्रागपकृष्या इत्यभिप्रायेणाह ननूत्पन्नाया मिति अर्थज्ञाना त्प्राग् यदि ज्ञानोत्पत्ति स्तदा तद्ग्रहणमपि प्रागेव सिद्ध्यतीत्यभिप्रायः अस्तु ज्ञानसंवित्तिरपि पूर्वं तावता प्रकृते किमायात- मिति चेदिदमायातम्। निराकारज्ञानस्योपल- ब्धिरशक्येति साकारं वाच्यमिति प्रत्यक्षज्ञाने आकारद्वयभानाभावाद् भासमान एक आकारो ज्ञानस्यैवेति नार्थसिद्धिरिति स्वपक्षानुकूलोऽयमा क्षेपो न प्रतिकूल इति भावः। एवं पूर्वमुत्पद्यमा- नवासौ ज्ञायते ज्ञापयति चार्थान्तरमिति यद् यौ- गपद्य मुक्तं तस्यापि ज्ञानाकारसिद्धावेव तात्प- र्यमिति सत्यं पूर्वं बुद्धिरुत्पद्यते नतु पूर्वं ज्ञायत इति सिद्धान्तवादिनोऽयमभिप्रायः यदि अर्थ- ज्ञाना त्प्राग्ज्ञानसंवित्तिः स्या त्तदा प्रत्यक्षे भास- मान आकारो ज्ञानस्यैव भवेदित्यर्थाकारो न सिद्ध्येत्। तत्तु न पूर्वं बुद्धेरुत्पत्तावपि तद्ग्र- हाभावा न्न तदाकारः प्रत्यक्षे भासितुमर्हति इत्यर्थाकार एव बलादनिच्छता पि स्वीकार्य इति

अधस्यैव पूर्वं ज्ञानं न बुद्धेरित्येत त्प्रदर्शयितु-
माह—

भा० भवति हि कदाचिदेतत् यज् ज्ञातोऽप्यर्थः सन् अज्ञात इत्युच्यते। न चार्थव्यपदेशमन्तरेण बुद्धेः स्वरूपोपलम्भनम्। तस्मा न्न व्यपदेश्या बुद्धिः अपदेश्यं च न प्रत्यक्षम्। तस्माद् प्रत्यक्षा बुद्धिः।

भवति हि कदाचिदेतद् यज्ज्ञातो ऽर्थः सन्नज्ञात इत्युच्यते इति इह देशे कोपि पुरुषो मया नुभूत इत्युक्त्या पूर्वमेवेदं व्याख्यातमिति न भूयो व्याख्यानमर्हतीति। तथापि संक्षिप्योच्यते यदि अर्थज्ञानयोरेकदा नुभवः स्या त्तदेकानुभवगोचरतैव स्यादिति तादृशानुभवाहितसंस्कारः ज्ञानमिवार्थमपिस्मारयेत् संस्कारोपधानाक्षमत्वे तु अर्थमिव ज्ञानमपि न स्मारयेत् अविशेषात्। नहि अस्ति संभवः स एवानुभवः

संस्कारमुपदधाति नोपदधाति च मिथोविरोधात् । भिन्नानुभवकल्पनायां तु ज्ञानविषयकानुभवस्य संस्काराधानसामर्थ्यं कल्प्यते अर्थविषयकानुभवस्य तु नार्थस्मरणाभावादित्यर्थविस्मरणेऽपि ज्ञानमात्रस्मरणमुपपद्यते इति नार्थसंवित्योरेकदानुभव इति । वस्तुतस्तु नायं भाष्यार्थः एकस्यैवानुभवस्य ज्ञानांशे संस्कारोपधायकत्वं अर्थांशे तु तदभावः कल्प्यते फलबलादित्यवच्छेदकभेदेन संस्कारोपधायकत्वानुपधायकत्वयोरेकत्र समावेशसम्भवेनानुभवभेदकल्पनायां बीजाभावात् सहानुभूतयोः सहैव स्मरणमिति नियमे मानाभावादुद्बुद्धसंस्कारस्यैव स्मारकतया यदंशस्मरणं न भवति तदंशे संस्कारोद्बोधाभावकल्पनमेवोचितमिति न ज्ञानस्मरणेऽपि अर्थविस्मरणेनार्थसंवित्तिसमये ज्ञानसंवित्तिनिराकरणं युज्यते तस्मान्नेदं भाष्यं अर्थसंवित्तियौगपद्यनिराकरणपरं किन्तु अर्थोपलब्धेः पूर्वं ज्ञानसंवित्तिसाधनस्य यत्फलं अर्थस्यज्ञानाकारत्वं

तदेवानेन भाष्येण निराक्रियते यदि ज्ञानं नीला कारं स्या त्तर्हि नीलाकारविनिर्मुक्तं न स्मर्य्येत स्मर्य्यते च तदाकारविनिर्मुक्तमिति न तदाकारमित्यर्थः। अर्थस्य जड़त्वात् ज्ञानोत्पत्तेः प्राग् न ज्ञातुं शक्यमिति न पूर्वं ज्ञायते इति। नचार्थव्यपदेशमिति स्वच्छंचिन्मात्रं केवलं ज्ञानमेवाशिष्यते ऽन्यत्किमपि नास्ति जगतीति शून्यवादिनां भवतां मतं तथाच त्वन्मते अनादिवासनावशादपारमार्थिकनीलपीताद्याकारेण ज्ञानमेव स्फुरति नतु कश्चिदपरः पारमार्थिक स्तत्र प्रकाशते तदिदमसंगतम् मृगतोयादिज्ञानस्येव नीलादिज्ञानस्यापि भ्रमत्वापत्तेः सर्वथा ऽसतो विषयस्य भानासम्भवा च्च ज्ञानस्य सविषयकस्यैव दर्शनात् निर्विषयकज्ञानानङ्गीकारात्। स्वप्नादावपि कदाचिदनुभूतस्यैवान्यथाभानं नतु सर्वथा असत इति विषयद्वारैव बुद्धेः प्रत्यक्षत्वं न स्वरूपत इति विषयानङ्गीकारे अप्रत्यक्षैवबुद्धि रित्याह तस्मादप्रत्यक्षा बुद्धिरिति दोषान्तरमाह—

भा० अपिच काममेकरूपत्वे बुद्धेरभावः नार्थस्य प्रत्यक्षस्य सतः। नचैकरूप्यम् अनाकारमेव हि बुद्धिमनुमीमहे साकारं चार्थं प्रत्यक्षमेवावगच्छामः । तस्मादर्थालम्बनः प्रत्ययः। अपिच नियतनिमित्तः तन्तुष्वेव उपादीयमानेषु पटप्रत्ययः इतरथा तन्तूपादानेऽपि कदाचित् घटबुद्धिरविकलेन्द्रियस्य स्यात् । नचैवमस्ति अतो न निरालम्बनः प्रत्ययः अतो न व्यभिचरति प्रत्यक्षम् ।

अपिचेति विषयानभ्युपगमे तन्तुष्वेव पटप्रत्ययो भवति न मृत्पिण्डेषु इति नियमो न स्यात् पटस्यासत्वाविशेषात् तन्तुष्विव मृत्पिण्डेष्वपि पटप्रत्ययोऽदूषितेन्द्रियस्यापि स्यान्नचैवं दृश्यते तस्मात्सालम्बन एव प्रत्ययो वाच्य इति

न व्यभिचारि प्रत्यक्षमिति ननु बाह्यपदार्थस्वीकारेऽपि कस्मात्तन्तुभ्य एव पटोत्पत्ति र्न मृत्पिण्डेभ्यः बाह्यार्थस्योभयत्र साम्यात्। नच यत्कार्यजननशक्ति र्यत्र तत एव तत्कार्य मिति नियम स्तथाच पटजननशक्ति स्तन्तुष्वेवेति तत एव पटोत्पत्ति र्न मृत्पिण्डेभ्य स्तत्र तादृशशक्तिविरहादिति वाच्यम्। तन्तुज्ञाने एव पटज्ञानजननसामर्थ्यं न मृत्पिण्डज्ञाने इति तन्तुज्ञानमेव पटज्ञानं जनयति न मृत्पिण्डज्ञानमिति व्यवस्थाया अन्यत्रापि वक्तुं शक्यत्वात्। तथाचोभयत्र शङ्कासमाधानयो स्तुल्यत्वादेकत्रैव विशिष्य पर्यनुयोगो नोचितः उक्तं च यथाविधं घटं दृष्ट्वा द्वैतवादी विचेष्टते ज्ञात्वा तथाविधं ज्ञानं अद्वैती किं न चेष्टते इति चेन्न शून्यवादिनां शक्तेरप्य भावादीदृशव्यवस्थोपपादनासम्भवात्। शक्तादपिकारणात् सततकार्योत्पत्त्यदर्शनात्। शक्त्यभिव्यञ्जकं सहकारिकारणं वाच्यम्। तच्चास्मन्मते सम्भवति देशकालनिमित्ततन्तुवायादीनां

सत्वात् त्वन्मते सहकारिणोप्यभावा त्तद्व्यव-स्था दुरूपपादैव। नच संवृतिरूपया शक्त्या व्य-वस्था तस्या मिथ्यात्वेन कार्यौपयिकत्वाभावात् सत्यत्वे च द्वैतापत्तिः। तद्रूपदार्थान्तरस्यापि स्वाकारापत्ति श्चेति वासनारूपैव शक्ति भवद्भि र्वाच्या तस्या श्च नियामकाभावात् सर्वत्र ज्ञाने प्रसक्तौ किंचिदेवज्ञानं कस्यचि द्ज्ञानस्य निमि-त्तमिति नियमो न स्यादिति। अपिच यद्विवा-सनामात्रापेक्षया तन्तुज्ञानं पटज्ञानं जनये त्तदा कारणान्तरापेक्षाकृतविलम्बाभावा त्सर्वदैव पट-ज्ञानं जनयेत् नैव वा कदाचित् जनयेत् नचैवमस्ति तस्मा त्कारणान्तरमेष्टव्यम्। यत्सत्वासत्वाभ्यां पटज्ञानस्य कादाचित्कत्वमुपपद्येत। किंच वीज-ज्ञानं विनापि अंकुरज्ञानदर्शना न्नोपादानज्ञानं कार्यज्ञानजनकं व्यभिचारादिति कार्यज्ञाननि-यामकमन्यदेव वाच्यमिति भाष्यमतमेव युक्तम् तदेवं वाह्यार्थग्रहणसामर्थ्या त्प्रत्यक्षं वाह्यार्थे प्र-माणं निरालम्बनत्वानुमानमपि वाह्यार्थाभावसा-

धनाय नोत्पत्तुमर्हति प्रत्यक्षविरोधादिति प्रत्यक्षमनुमानञ्चेति प्रमाणद्वयेन न वाह्यार्थाभावसिद्धिः। नेहनानास्तिकिञ्चनेत्याद्यागमस्यात्मप्रशंसापरत्वे नौपचारिकत्वा न्न स्ववाच्यार्थे प्रामाण्यमिति न वाह्यार्थबाधनाय सामर्थ्यम् प्रत्युतविविधसाध्यसाधनाधिकारिबोधकवाक्यानि वाह्यार्थमेव साधयन्ति न तदभावमिति एव नुपमानार्थापत्योरपि द्वैते एव संभवा न्ना द्वैतसाधकत्वमित्यलमतिप्रपञ्चनेन इति।

इति कल्पकलिकायां शून्यवादः

पूर्वं निमित्तसूत्रे लोकप्रसिद्धत्वा त्प्रत्यक्षादीनि प्रमाणानि न परीक्षितव्यानीत्युक्तं ततः शुक्तिरजतादिज्ञाने प्रत्यक्षस्य व्यभिचारदर्शनात्तत्पूर्वकत्वाच्चानुमानादे र्व्यभिचार इति तानि परीक्षितव्यानीत्युक्तं तदनन्तरं यद् व्यभिचारि त न्न त्प्रत्यक्षं यत् प्रत्यक्षं त न्न व्यभिचारि कीदृशं त त्प्रत्यक्षं य न्न व्यभिचारीत्यपेक्षायां सत्संप्रयोग इत्यादिलक्षणमभिहितं तदव्यभिचा-

रसमथनाय बौद्धमतं च निराकृतमित्येतावता प्रबन्धेन प्रत्यक्षस्याऽव्यभिचारित्वं समर्थितं तत्पूर्वकत्वाच्चानुमानादेऽर्व्यभिचारसन्देहो निराकृतः। इदानीं स्वलक्षणेनाप्यनुमानस्याव्यभिचारित्वादपरीक्ष्यत्वमुच्यते—

भा० अनुमानं ज्ञातसम्बन्धस्यैकदेशदर्शनादेकदेशान्तरेऽसन्निकृष्टेऽर्थे बुद्धिः।

अनुमानमिति। एवंलक्षणकमनुमानं न परीक्षितव्यं एवंलक्षणकत्वा दव्यभिचारिप्रत्यक्षपूर्वकत्वाच्चेत्याशयः ज्ञातसंबन्धस्येति ज्ञातः निश्चितः संबन्धः व्याप्तिरूपः साध्यसाधनयोर्येन स ज्ञातसंबन्ध स्तस्य साध्यसाधनव्याप्तिनिश्चयवतः पुरुषस्येतियावत् एकदेशस्य संबन्धिनोरेकतरस्य संबन्धानुयोगिनो हेतोः पक्षे दर्शनादेकदेशान्तरे तादृशसंबन्धप्रतियोगिनिचक्षुराद्यसन्निकृष्टे साध्येऽर्थे विषयित्वं सप्तम्यर्थः तद्विषयिणी या बुद्धि स्तदनुमानमित्यर्थः। अथवा

षष्ठ्यर्थे बहुव्रीहिः ज्ञातः संवन्धो यस्य स ज्ञातसंवन्धः सपक्षो महानसादिः तस्य य एकदेशः हेतु धूमादि स्तस्य पर्वतादौ दर्शनादेकदेशान्तरे तत्रैव वह्निबुद्धिः सपक्षे हि साध्यसाधनयो र्व्याप्तिनिश्चयो भवतीति भाव; । ज्ञात श्चासौ सम्बन्धश्चेति कर्मधारयो वा सवन्धिद्वयनिरूपितः सम्वन्धः एकदेशो तस्य य एकदेशः संवन्धानुयोगी हेतु धूमादिः तस्य पर्वतादौ दर्शनादेकदेशे तादृशसंवन्धप्रतियोगिनि वह्न्यादौ साध्ये या बुद्धिरित्यर्थः। अथवा ज्ञातः संवन्धो यस्य साध्यसाधनद्वयस्य तत्ज्ञातसंवन्धं साध्यसाधनोभयं तस्य य एकदेशः साधनं तस्येत्यर्थः पूर्ववत् । अत्र समुदायिवाचकावेकदेशशब्दौ नच पुरुषैकदेशसमुदायानां अत्रानिर्देशा न्नान्यपदार्थत्वं युक्तम् एकदेशस्य तु लक्षणवाक्ये निर्देशा त्तस्यैवान्यपदार्थत्वं युक्तमिति वाच्यम् । निर्दिष्टस्यैवान्यपदार्थत्वं भवतीति नियमे मानाभावादाकांक्षानिवर्तनक्षमस्यानिर्दिष्टस्यापि अन्यपदार्थ-

त्वेन बहुव्रीहावाश्रयणात् । अत एव स्वर्गकामो यजेत इत्यादौ बहुव्रीहिपक्षे पुरुषस्य लाभः अन्यथा तस्यानिर्दिष्टत्वेनान्यपदार्थत्वेनाग्रहणे तत्र बहुव्रीहि र्न स्यात् । एकदेशशब्दस्य समस्ततया गुणत्वेन विशेष्यतया न्वययोग्यताविरहात् । अन्यत्रान्वयाभ्युपगमे साकांक्षत्वेनासमर्थत्वापत्या समासाभावप्रसंगाच्च । नच तथापि ज्ञातसंबन्धस्यैकदेशिपरत्वे तदपेक्षस्यैकदेशशब्दस्यासमर्थत्वापत्या दर्शनशब्देन सह समासानुपपत्ति स्तदवस्थैवेति वाच्यम् । देवदत्तस्य गुरुकुलमितिवन्नित्यसापेक्षस्य समासाङ्गीकारात् । न खलु एकदेशः कश्चित् स्वतन्त्रः पदार्थः किन्तु कस्यचि त्कश्चिदेकदेशो भवति इत्येकदेश इत्युक्तौ कस्यैकदेश इतिनियमेनैकदेशिनः आकाङ्क्षा भवति अतः नित्यसापेक्षत्वस्य सामर्थ्यविघातकत्वं नास्तीति न समासानुपपत्तिरिति स्पष्टमन्यत्र । कः पुनः संबन्धो व्याप्तिः येन केनापि सम्बन्धेन यो नियमः स एव संबन्धो व्याप्ति न

तु संयोगसमवायादिरूपसंबन्धविशेषनियतः कृत्तिकारोहिण्युदयादौ व्यभिचारात्। व्याप्यत्वं पुनः यो यस्य देशकालाभ्यां न्यूनः समो वा स तस्य व्याप्यः व्यापकश्च यो यस्य देशकालाभ्यामधिकः समो वा स तस्य व्यापकः। एवंच व्याप्यस्य व्यापकापेक्षयासमन्यूनदेशकालत्वाद्व्याप्ये ऽवगते यदि व्यापको ऽत्र न स्या त्तर्हि व्यापकत्वमेव तस्य भज्येतेति व्याप्यो व्यापकमवगमयति। व्यापकस्य तु व्याप्यापेक्षया समाधिकदेशकालत्वाद् व्याप्यदेशकालातिक्रमणे ऽपि व्यापकत्वाक्षते र्न व्याप्यावगमकत्वमिति। ननु घटो गन्धवान् पृथिवीत्वादित्यादौ व्यापकेना पि व्याप्यानुमानं दृश्यते दृश्यतां। किन्तु तत्रापि गन्धत्वावच्छिन्नापेक्षया पृथिवीत्वस्य व्याप्यत्वमप्यवगतमिति तत्र व्यापकत्वव्याप्यत्वयोः सत्वेऽपि गमकत्वं व्याप्यत्वेनैव न तु व्यापकत्वेन विषमव्याप्तिके वह्निमान् धूमादित्यादौ व्याप्यत्वस्यैव गमकत्वदर्शनात् अत्रापि तस्यैव

गमकत्वाङ्गीकारौचित्यात् अन्यथा विषाणित्वेन गोत्वानुमानमपि स्यादिति। ननु निखिलसाध्यसाधनाधिकरणीभूतदेशकालयो रर्वाग्दृशः प्रत्यक्षीकर्तु मशक्यतया यत्र क्वचन देशे काले च समानाधिकरण्यमात्रदर्शनेन व्याप्त्यवगमे वैपरीत्यस्यापि सम्भवाद् व्याप्यत्वावधारणमेव दुर्घटमिति गतमनुमानप्रत्याशया। महानसादिगत वह्निधूमयोरेव व्याप्त्यवधारणे तु तादृशव्यक्तेः पक्षे पर्वतादौ विरहाद नुमानस्यैवासम्भवापत्तेः नच नैयायिकानामिव भवतां सामान्यलक्षणाप्रत्यासत्तिरस्ति यया सर्वसाध्यसाधनयोः सकृदेव प्रत्यक्षीकरणाद् व्याप्त्यवगमः शक्यसंपादनः स्यादिति चेन्न व्यभिचारदर्शनासहकृतः यत्र क्वचन देशे काले वा साध्यसाधनसहचारग्रहस्य सामान्यतः व्याप्तिनिर्णायकत्वाभ्युपगमा न्न दोषः। नहि व्याप्यत्वावगमाय निखिलसाध्यसाधनतदधिकरणदर्शनापेक्षा अन्यथा व्याप्त्यवगमवेलायामेव पक्षस्यापि साध्यवत्वे-

नावगमादनुमानवैयर्थ्यापत्तेः । नचैकत्रसामानाधिकरण्यदर्शनेऽपि परत्र साध्याव्यधिकरणे हेत्वभावपरिच्छेदो न स्यादिति वाच्यम् माभूत्परिच्छेदः किन्तु साध्याभावाधिकरणे हेतुदर्शनं नाभूदितिव्यभिचारदर्शनाभावसहकृतं भूयः सहचारदर्शनं सामान्यतः व्याप्तिनिर्णायकमित्येवाङ्गीकारान्न दोषः । नन्वेवंव्याप्येन व्यापकावगमाङ्गीकारे ब्रह्महत्यायामधर्मत्वेन हिंसात्वस्य व्याप्यत्वावगमाद् अग्नीषोमीयहिंसायाअधर्मत्वानुमानं स्यादिति चेन्न हिंसात्वहेतोः सोपाधिकत्वात् । तथाहि निषिद्धत्वं हि हिंसात्वं विनापि सुरापानादावधर्मप्रयोजकत्वेन दृष्टं हिंसात्वं तु निषिद्धत्वं विना नक्वचिदधर्मप्रयोजकत्वेन दृष्टमिति ब्रह्महत्यादावपि प्रयोजकत्वेन निषिद्धत्वस्यैवाधर्मत्वव्याप्यत्वंस्वीकर्तुमुचितं न हिंसात्वस्येति निषिद्धत्वं हिंसात्वे स्वगतां व्याप्तिं सान्निध्यादुपदधाति स्फटिके आरुण्यं जपाकुसुममिवेति ध्येयम् । किंच सत्प्रति-

पक्षितो ऽपिहेतुः तथाहि अग्नीषोमीयहिंसा धर्मः विहितत्वादग्निहोत्रादिवत्। अग्नीषोमीयादि हिंसायामधर्मत्वानुमाने आगमविरोधोऽपि तस्या अधर्मत्वे स्वर्गादिफलं न स्यात्। नहि अधर्मेण स्वर्गो भवतीति कस्यचिदभिमतं एवमव्यवस्थित-हेतुनानुमाने यागोऽ धर्मः क्रियात्वाद् हिंसादि-क्रियावदित्यपिस्यात्। इति सर्व एव व्यवहारो ऽधर्मेणोपप्लुत इति न किंचित्परित्राणाय स्या-दिति प्रमाणान्तरेण साध्यवत्त्वात्मना पक्षे प्रमिते सिद्धसाधनदोषादनुमितिरेव न भवतीति प्रमा-णान्तरेण साध्यवत्त्वेनाप्रमितस्य पक्षस्यानुमेयत्वं हेतुमत्त्वेन दृष्टान्ताप्रमितौ व्याप्त्यवगमासम्भवा त्प्रमाणान्तरेण हेतुमत्त्वेन प्रमितस्यगमकत्वम् प्रतिज्ञावाक्ये वह्निमान् धूमादिति सामानाधि-करण्येन पर्वते वह्निरिति वैयधिकरण्येन वा धर्म-धर्मिणो निर्देशः कर्तव्यः। तत्र सामानाधिकरण्य-वैयधिकरण्ययोरन्यतरत्र विशिष्याग्रह एवमत्र-निर्देष्टव्यं नैवमिति। साध्यपक्षयोरेकैकस्य

मिलितस्य वा न साध्यत्वं दृष्टान्ते लिङ्गदर्शन-वेलायामेव साध्यस्य प्रत्यक्षत्वात्। पक्षस्यापि तत्र हेतुदर्शनसमये प्रत्यक्षत्वात्। अतएव नो-भयस्यापि प्रमितिजिज्ञासाविरहात् अपिच वह्नि-मात्रसाधने धूमस्य हेतोरपक्षधर्मत्वापत्तिः धूमस्य वह्नावसत्वात् केवलपक्षस्यापि साध्यतायां हेतोरगमकत्वापत्तिः दृष्टान्ते महानसादौ हेतुना सह पक्षस्याननुवृत्तेर्व्याप्तिग्रहासम्भवो वा अतएव नोभयस्यापि उक्तदोषात्। अथ माभू-द्धर्मधर्मिणोः समस्तयो र्व्यस्तयो र्वा साध्यता तत्संबन्धस्यैव सास्तु इति चेन्न प्रतिज्ञावाक्ये षष्ठ्या नाम्ना वा तदनिर्देशात्। नहि लोके पर्वतस्याग्नि रग्निपर्वतसंबन्धोवेति प्रयुज्यते नच दृष्टान्ते हेतुना तादृशसंबन्धानुगमदर्शनमपि। किंच सामान्यतः सबन्धसत्वं न साधयितु मर्हं तस्य सिद्धत्वात् नच पर्वतादाविवात्राकारद्वयं येनैकेनाकारेण सिद्धत्वेऽपि आकारान्तरेण साध्य-त्वं स्यादिति नच संबन्धं पक्षीकृत्य वह्निमत्वं

पक्षितोऽपिहेतुः तथाहि अग्नीषोमीयहिंसा धर्मः विहितत्वादग्निहोत्रादिवत् । अग्नीषोमीयादि हिंसायामधर्मत्वानुमाने आगमविरोधोऽपि तस्या अधर्मत्वे स्वर्गादिफलं न स्यात् । नहि अधर्मेण स्वर्गो भवतीति कस्यचिदभिमतं एवमव्यवस्थित-हेतुनानुमाने यागोऽधर्मः क्रियात्वाद् हिंसादि-क्रियावदित्यपिस्यात् । इति सर्व एव व्यवहारोऽधर्मेणोपप्लुत इति न किंचित्परित्राणाय स्या-दिति प्रमाणान्तरेण साध्यवत्वात्मना पक्षे प्रमिते सिद्धसाधनदोषादनुमितिरेव न भवतीति प्रमा-णान्तरेण साध्यवत्वेनाप्रमितस्य पक्षस्यानुमेयत्वं हेतुमत्वेन दृष्टान्ताप्रमितौ व्याप्त्यवगमासम्भवा त्प्रमाणान्तरेण हेतुमत्वेन प्रमितस्यगमकत्वम् प्रतिज्ञावाक्ये वह्निमान् धूमादिति सामानाधि-करण्येन पर्वते वह्निरिति वैयधिकरण्येन वा धर्म-धर्मिणो निर्देशः कर्तव्यः । तत्र सामानाधिकरण्य-वैयधिकरण्ययोरन्यतरत्र विशिष्याग्रह एवमेव-निर्देष्टव्यं नैवमिति । साध्यपक्षयोरेकैकस्य

मिलितस्य वा न साध्यत्वं दृष्टान्ते लिङ्गदर्शन-वेलायामेव साध्यस्य प्रत्यक्षत्वात्। पक्षस्यापि तत्र हेतुदर्शनसमये प्रत्यक्षत्वात्। अतएव नो-भयस्यापि प्रमितिजिज्ञासाविरहात् अपिच वह्नि-मात्रसाधने धूमस्य हेतोरपक्षधर्मत्वापत्तिः धूमस्य वह्नावसत्वात् केवलपक्षस्यापि साध्यतायां हेतोरगमकत्वापत्तिः दृष्टान्ते महानसादौ हेतुना सह पक्षस्याननुवृत्तेर्व्याप्तिग्रहासम्भवो वा अतएव नोभयस्यापि उक्तदोषात्। अथ माभू-द्धर्मधर्मिणोः समस्तयो र्व्यस्तयो र्वा साध्यता तत्संबन्धस्यैव सास्तु इति चेन्न प्रतिज्ञावाक्ये षष्ठ्या नाम्ना वा तदनिर्देशात्। नहि लोके पर्वतस्याग्नि रग्निपर्वतसंबन्धोवेति प्रयुज्यते नच दृष्टान्ते हेतुना तादृशसंबन्धानुगमदर्शनमपि। किंच सामान्यतः सबन्धसत्वं न साधयितु मर्हं तस्य सिद्धत्वात् नच पर्वतादाविवात्राकारद्वयं येनैकेनाकारेण सिद्धत्वेऽपि आकारान्तरेण साध्य-त्वं स्यादिति नच संबन्धं पक्षीकृत्य वह्निमत्वं

साधयितुं शक्यं सवन्धमात्रस्य वह्नि मत्वाभावात् संवन्धविशेषस्तु अनुमाना त्प्रागसिद्ध इति न तस्य पक्षता नच तत्र हेतोरपिदर्शनमिति विशिष्टो धर्मी अनुमानज्ञानविषयः। संवन्धं विना वि-शिष्टो न भवितुमर्हतीति विशिष्टसाधनादेवा-र्थात्सिध्यतः संवन्धस्य प्राप्ताप्राप्तविवेकन्यायेनानु मेयत्वं नतु स्वातन्त्र्येण अतएव दण्डीत्यादौ संवन्धस्य गम्यत्वमुपपद्यते प्रकृतिप्रत्ययाभ्यां दण्डतत्संवन्धिनोरभिधाना देवार्थात्तत्संवन्धप्र-तीत्युपपत्तेः। तस्माद्विशेषणविशेष्यभावापन्नयोर्ध र्मधर्मिणो रेवसाध्यत्वम्। अत्र किं विशेषणं किं-विशेष्य मित्यपेक्षायां केचिदाहुः धर्मिगतोऽनित्य त्वादिर्धर्मः कृतकत्वादिहेतुनासाध्यते स तु धर्मः विशेषणं वा विशेष्यो वा भवतु न तत्राग्रह इदं विशेषणं नेदमिति तन्न मनोरमम्। पर्वतो वह्नि-मान् धूमवत्त्वादित्यादौ पक्षस्य पर्वतादेः साध्ये विशेषणविधयाभानोपगमे धर्मिणोऽप्राधान्या-पत्तौ हेतुवाक्योक्तस्यधूमादेः तत्रान्वयो न प्रती

येत किन्तु प्राध्यान्येनोपस्थिते साध्ये एव झटिति संवन्धः प्रतीयेत तत्रा संभवमवधार्य पश्चात् कृच्छ्रेण धर्मिसंवन्धः कल्पनीयः स्यादथवा पर्वतस्य धूमवत्वादितिपुनः पक्षस्य षष्ठ्यन्तस्योपादानं कर्तव्यं भवेदिति धर्मविशिष्टस्य धर्मिणः एव साध्यत्वं थुक्तम् । नच धर्मिणो विशेष्यतया भानाङ्गीकारे उदाहरणस्थलेऽपि प्राधान्याद् धर्मिणैव हेतोः संवन्धः स्यान्न साध्येन तस्य गुणत्वादितिवाच्यम् । यत्र यत्र धूमः तत्र तत्र वह्नि रित्युदाहरणे पुनः साध्यस्योपादानात्प्राधान्ये नोपस्थिते साध्ये हेतो रन्वयात् प्रतिज्ञावाक्ये साध्यस्य विशेषणविधया भानेऽपि दोषविरहादित्यन्यत्र विस्तरः । नच व्याप्येन व्यापकावगमो भवतीति पूर्वोक्त्या विशिष्टस्य धर्मिणः साधनव्यापकत्वाभावा त्तदनुमानं न संभवतीति वाच्यम् । व्यापकस्वरूपमात्रधियोऽनुमानत्वाभावाद् विशिष्टधर्मिणोऽनुमाने विशेषणविधया व्यापकावगमोभवत्येवेति तात्पर्येण तथोक्तेः । यस्मिन्नर्थे स्वस्य

यादृशी अनुमिति र्भवति तत्रार्थे तादृश्येवानुमितिः परस्य येन वाक्येन जायते तद्वाक्यं साधनमित्युच्यते तस्य वाक्यस्यावयवा स्त्रयः प्रतिज्ञाहेतूदाहरणानि। तत्रसाध्यनिर्देशः प्रतिज्ञा साध्यः स्वधर्मविशिष्टो धर्मी इत्युक्तम्। परस्यापि तादृशमनुमानं जायतामितीच्छयापूर्वसाधनाङ्गं प्रतिज्ञावाक्यं वक्तव्यम्। पर्वतो वह्निमानिति। नतु वह्निमान् पर्वत इति उद्देश्यविधेययो र्वैपरीत्यापत्तेः। नचोद्देश्यस्य विधेयेन नियमाद् पर्वतो वह्निमानेवेति बोधः स्यात्ततश्च हेतोरपि ततोनिवृत्तिः प्रतीयेत इति वाच्यम्। नियमेन विरुद्धधर्मनिवृत्तेरेव बोधनेना विरुद्धधर्मनिवृत्ते रबोधनात् अतएव शङ्खः पाण्डर एवेत्युक्तौ पाण्डरत्वाभावतन्नियत नीलादीनामेव निवृत्ति र्बोध्यते नतु द्रव्यत्वप्रमेयत्वादीनां तेषां तदविरोधित्वात्। एवं प्रकृतेपि वह्न्यभावतन्नियतधर्माणां निवृत्तिबोधेऽपितदविरोधिनो धूमादे र्निवृत्यबोधनान्न दोषइति असन्निकृष्ट इति विशेषणेन शीघ्रप्रवृत्तिशीलेन प्रत्य

त्वादिप्रमाणेन तेन तद्विपरीतेन वा रूपेण परिच्छिन्नस्य पक्षत्वं व्यवच्छिद्यते प्रमाणपरिच्छिन्ने प्रमाणान्तर प्रवृत्तेर्निष्फलत्वात् । तदुक्तं नहि करिणि प्रत्यक्षे चीत्कारेण तमनुमिमतेऽ नुमातारः । नच महानसादौ असकृद्दृष्टस्यैवाग्नेः पर्वतेऽनुमानात्तस्यापि नैष्फल्यम् । नचदेशान्तरकालान्तरव्यक्त्यन्तरभेदेना प्रमितप्रमापकत्वं । निखिलसाध्यतद्देशकालानां व्याप्त्यवगमकाले एव प्रमितत्वात् । अन्यथा निखिलसाध्यसाधनेषु व्याप्तिग्रह एव न स्यादिति वाच्यम् । वह्निमत्त्वादिना सामान्यतः पर्वतादेर्ज्ञानेऽपि पर्वतत्वादि विशेषधर्मेण तदानीं ज्ञानाभावात्तेन रूपेण जायमानानुमानस्या प्रमितप्रमापकतया वैफल्याभावादिति । यत्तुस्मरणाभिमाननिरासार्थमसन्निकृष्ट ग्रहणमित्युक्तं तदसत् । तथा सति विपरीतरूपेण परिच्छिन्नेऽ नुमाननिरासानुपपत्तेः । तद्व्यावर्त्तनाय विशेषणान्तरोपादानविरहादित्यवधेयम् । एकस्मिन् विषये विरुद्धप्र-

माणद्वयसम्पाते पूर्वप्रवृत्तेन प्रमाणेन पश्चात्प्रवर्त्तमानस्य प्रमाणस्य बाध एव भवति द्वयोरेकत्र समावेशासम्भवात्। बाधोद्विविधः पूर्वमिथ्यात्वज्ञापनलक्षणः उत्तरोत्पत्तिनिरोधलक्षणश्च आद्यो यत्र पूर्वज्ञानमनपेक्ष्योत्तरज्ञानमुत्पद्यते तत्रोत्तरज्ञानेन पूर्वज्ञाने मिथ्यात्वं ज्ञाप्यते अन्यथोत्तरज्ञानस्यात्मलाभ एव नस्यात्। यथा शुक्ताविदं रजतमिति ज्ञानं स्वविपरीतेन नेदं रजतमिति ज्ञानेन बाध्यते अत्रेदंरजतमिति ज्ञानम प्रबाध्य नेदं रजतमिति ज्ञानमात्मलाभाय न प्रभवतीति परेण पूर्वबाधः। नहि पुरोवर्त्ति वस्तु रजतारजतोभयात्मकं येन प्रमाणज्ञानद्वयावकाशः स्यात्। वस्तुनः परिनिष्ठितत्वेन विरुद्धधर्मद्वयासम्भवात्। नापि कदाचित् कस्यचिद्रजतं कस्यचित् कदाचिदरजतमिति विकल्पः। विकल्पस्य साध्यधर्मतयासिद्धे वस्तुन्यभावान्नापि गत्यन्तरमिति बाधः एवेति। द्वितीयः पूर्वप्रवृत्तेन प्रमाणेन पश्चात्प्रवर्त्तमानस्य विरोधिनः

प्रमाणस्यानुत्पत्तिलक्षणः एकेन प्रमाणेनेद मित्थमेवेति प्रमेये निश्चिते विरोधिनः प्रमाणस्यो पपत्तुमवकाश एव न भवति। यथा वह्निः उष्ण इति प्रत्यक्षेण पूर्वप्रवृत्तिशीलेन निर्णीते हेतुदर्शन व्याप्तिस्मरणादिसध्रीचीनस्यानुष्णत्वग्राहिणोऽ नुमानस्योत्पत्तिनिरोधलक्षणो बाधः । यावद नुमानमुत्पित्सति तावत् शीघ्रप्रवृत्तेन प्रत्यक्षेणा- नुमानस्य विषयो पहरणात्तदीयमुखव्याप्त्या- दिर्निरुध्यते यावत्कृतकत्वेनाग्नौ उष्णत्वमनुमा- तुमिष्यते तावत्पूर्वमेव प्रत्यक्षेण तत्रोष्णत्वा- निर्णयात्कृतकत्वस्य व्यभिचारि त्वमवगम्यते इत्यनुमानमुखव्याप्तिनिरोधात्त त्रानु मानानु त्पत्तिरेव । एवं प्रमाणान्तरेपि शीघ्रप्रवृत्तिशीलेन प्रमाणेन मन्थरप्रवृत्तिकस्य प्रमाणस्यानुत्पत्ति- लक्षणो बाधो बोध्यः। नचैवं पूर्वप्रवृत्तेन प्रत्य- क्षेण चन्द्रतारादिपरिमाणे परिच्छिन्ने तद्विरो- धिनः पश्चात्प्रवर्तमानस्य शब्दस्यापि अनुत्पत्ति लक्षणो बाधः स्यादिति वाच्यम् दूरत्वादिदोषेण

सांशयिकतया प्रत्यक्षस्य स्वयमप्रतिष्ठितत्वात्। परिनिष्ठितं हि प्रमाणं स्वविरोधि प्रमाणं बाधते। यत्तु दोषादिवशा त्स्वयमप्रतिष्ठितं भाति तत् परिनिष्ठितेन परेण बाध्यते। तथाच परिनिष्ठितं बाधक मपरिनिष्ठितं च बाध्यं परिनिष्ठितत्वं च दोषबाधज्ञानाभावादवसेयमिति दिक्। अनुमित्सितरूपेण तद्विपरीतेन वा परिच्छिन्नः सन्निकृष्ट स्तद्विपरीतोऽसन्निकृष्ट इति साध्येऽसन्निकृष्टविशेषणा त्प्रतिज्ञाभासा निराकृताः। सिद्धसाधनेन बाधेन चानुमितिजननासमर्थं वाक्यं प्रतिज्ञाभासः सिद्धसाधनस्थले नैष्फल्यादेव नानुमानम्। नहि करिणि दृष्टे पादेन तस्यानुमित्सा कस्यापि अनुभवसिद्धा। प्रमाणान्तरविरोधेपि नानुमानं। तत्र प्रत्यक्षविरोधे वह्निरनुष्णः कृतकत्वादित्यादौ यथानानुमिति स्तथा दर्शितम्। अनुमानविरोधे शब्दोऽश्रावणः गुणत्वा द्रूपवदित्यादौ बलवता श्रावणत्वानुमानेनाश्रावणत्वानुमितेरनुत्पत्तिः ननु कथमश्रावणत्वानुमानापेक्षया

श्रावणत्वानुमिते बलवत्त्वम् । श्रोत्रशब्दज्ञानयोर-न्यत्र कार्यकारणभावज्ञानं विनात्र प्रतिषेधो दुर्घटः अप्रमितप्रतिषेधायोगादिति कार्यकारण-भावो न्यत्रावश्यमधिगन्तव्य इति शब्दज्ञान-श्रोत्रयोरपि कार्यकारणभावो गृह्यते अविशेषात् तत श्च पश्चा त्प्रवर्तमानायाः श्रावणत्वानुमिते र्दुबलत्वेन वाध्यत्वमेवेति । यत्तु दिग्नागेनेदं प्रत्यक्षविरोधोदाहरणमित्युक्तं तदसत् । श्रावण-त्वस्यानुमेयत्वेन प्रत्यक्षत्वाभावात् श्रावणत्वं हि श्रोत्रजन्यज्ञानत्वं नहिश्रोत्रं ज्ञानं चोभयं श्रोत्राग्रा ह्यमिति न श्रावणत्वस्य प्रत्यक्षत्वं किन्तु अनुमे-यत्वमेवेति न प्रत्यक्षविरोधोदाहरणमिदमिति । शब्दविरोध स्तावत् त्रिधा । प्रतिज्ञापूर्वसंजल्प-सर्वलोकप्रसिद्धिभेदात् । उच्चारणधर्मधर्म्युक्ति-भिः प्रतिज्ञाविरोधः पुन स्त्रिधा । उच्चारणविरोधः यावज्जीवमहं मौनीति अत्रैतदुच्चारणादेव प्रति-ज्ञातमौनित्वस्य बाधः । धर्मोक्त्या बाधो यथा सर्वं वाक्यं मृषेति अत्र सर्ववाक्यस्य मृषात्वे

प्रतिज्ञावाक्यमपि मृषा स्यात् तत श्चान्येषा
मृषात्वं स्यात् । नहि अन्येषांममृषात्वं विना स
मृषेति वाक्यस्य मृषात्वं संभवति इतिमृषात्वेन
मृषात्वबाधः । यन्मु क्त्या जननी मे वन्ध्या अ
जननीरूपयन्मु क्त्या तस्या वन्ध्यात्वबाधः । सो
वचनविरोधः पूर्वसंजल्पविरोधो यथा बौद्धशब
नित्या इति अत्र तेषां नित्यत्वं बौद्धशब्दत्वं क
मिति बौद्धशब्दत्वकथनादेव नित्यत्वबाधः स
लोकप्रसिद्धिविरोधः शशी न चन्द्र इति अ
चन्द्रपदेन शशिविषयको बोधः सर्वेषां जाय
यदि शशी चन्द्रपदवाच्यो न स्या त्तर्हि त
स्तद्विषयकबोधो न स्यात् भवति च स सर्वे
मिति शशी तत्पदाभिधेय इति तत्पदानभिधे
त्वं बाध्यते । वस्तुतस्तु अत्र न शब्देन प्रतिज्ञ
तार्थो बाध्यते किन्तु प्रत्यक्षानुमानार्थापत्तिभिः
शब्दस्पर्शितामात्रेण शब्दबाधो भिहित इ
निपुणैरवधेयम् । शब्दबाधस्योदाहरणं पुनरि
नरशिरः कपालंशुचि प्राणयङ्गत्वात् शुक्तिशङ्खव

स्पष्ट एवानाशास्थीत्यागमबाधः अग्निहोत्रं न स्वर्ग-साधनम् क्रियात्वात् भोजनवत्। अग्नीषोमीयहिंसा प्रत्यवायकरी हिंसात्वात्। ब्रह्महत्यादिवदित्यादौ श्रुतिविरोधः स्पष्ट एव। जीवी चैत्रो गृहे नास्तीति प्रत्यक्षेणावगतं जीविन श्चैत्रस्य गृहासत्त्वं बहिःसत्त्वं विनानुपपद्यमानं बहिःसत्त्वं गमयतीत्यत्र तस्यैव बहिःसत्त्वाभावप्रतिज्ञानेऽर्थापत्तिविरोधः। इयं च दृष्टार्थापत्तिः। अस्याः शेषमुदाहरणन्तु पुष्टयं बालिकादव्यसेयं श्रुतार्थापत्तिः पीनो देवदत्तो दिवा न भुङ्क्ते अत्र पीनत्वं भोजनं विनानुपपद्यमानं दिवानिषेधाद् रात्रौ कल्पयति तत्र तदभावप्रतिज्ञायां श्रुतार्थापत्तिविरोधो बोध्य इति। शशः शृङ्गवान् पशुत्वादित्यादावनुपलब्ध्या शशे शृङ्गाभावनिर्णयादभावविरोधः। एवं धर्माधर्म्युभयेषां तत्स्वरूपविशेषयोश्च प्रत्यक्षादिबाधस्योदाहरणं वार्तिके विस्तृतमिति तत एवावधेयम्। विस्तरभयान्न तदुदाहृतमिति। एवं च प्रतिज्ञाभासादयो दोषा

प्रतिपाद्यते तत्रानैकान्तिकः संशयहेतुः विरुद्धश्च विपर्ययहेतुः अनैकांतिक स्त्रिविधः साधारणासाधारणविरुद्धाऽव्यभिचारिभेदात् सपक्षे विपक्षे चोभयत्र वर्तमानः साधारणः यथा शब्दो नित्यः प्रमेयत्वाद् अप्रमेयत्वं च सपक्षेषु घटादिषु विपक्षेषु आकाशादिषु वर्तते इति नित्यत्वानित्यत्वोभयसहचरितप्रमेयत्वस्य शब्दे दर्शनात्तत्साध्यस्य संशायकमेव न निश्चायकमिति संशायकस्य निश्चायकत्वेनोपादानमयुक्तमिति तस्य दोषत्वम्। सपक्षविपक्षोभयव्यावृत्तःपुनरसाधारणः यथा क्षिति र्गन्धवती पृथिवीत्वादित्यादौ पृथिव्यतिरिक्ते गन्धाभावा न्नात्र सपक्षत्वमिति ततो व्यावृत्तं विपक्षा च्च जलादे र्व्यावृत्तं पृथिवीत्वं पक्षमात्रवृत्तित्वेनासाधारणं विपक्षव्यतिरेकाच्चास्यसंशायकत्वं। सपक्षान्वयो विपक्षव्यतिरेकश्चेति द्वयं साध्यनिर्णयांगम्। तत्रानैकान्तिके सपक्षान्वयो विद्यते किन्तु विपक्षव्यतिरेको नास्ति इति विपक्षव्यतिरेकप्रयुक्तमेव तस्य संशायकत्वमेव-

मसाधारणस्य विपक्षव्यतिरेकवत्वेपि सपक्षान्व-याभावात्त त्प्रयुक्तमेव संशायकत्वम् एकैकांगवै-कल्यस्योभयत्र साम्या त्साधारणमिवासाधारण-मपि संशायकमिति भावः इदमसाधारणस्य संशायकत्वं बौद्धमतेन बोध्यं स्वमते असाधारणं यथा न संशायकं तथाग्रे वक्ष्यते । वायुरप्रत्यक्षः द्रव्यत्वे सति रूपशून्यत्वादाकाशवत् । वायुः प्रत्यक्षः महत्वे सति द्रव्यत्वाद्‌ घटवदित्यादौ विरुद्धाव्यभिचारित्वं बोध्यम् । अयमेव नैयायिकैः सत्प्रतिपक्ष इति व्यवह्रियते इति दृष्टान्तदोषाः वार्तिके प्रपञ्चिता इति तज्जिज्ञासुभि स्तत्रैव द्रष्ट-व्यमिति ।

भा०—तत्तु द्विविधम् प्रत्यक्षतो दृष्टसंबन्धं सामान्यतो दृष्टसंबन्धं च-प्रत्यक्षतो दृष्टसंबंधं यथा धूमाकृतिद-र्शना दग्न्याकृति विज्ञानम् सामान्यतो

दृष्टसंबन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तर प्राप्तिमुपलभ्य आदित्यगतिस्मरणम् ।

स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्यैव विधापदार्थत्वेन प्रकृते सामान्यतो दृष्टसम्बन्धोदाहरणेगतिप्राप्तिसम्बन्धेऽपिप्रत्यक्षतो दृष्टसंबन्धत्वमस्तीति तयो र्विरोधाभावा त्कथं द्वैविध्योपपत्तिः नहि भवति पदार्थोऽष्टविधः घटद्रव्यगुणकर्मसामान्यविशेषसमवायाभावभेदादिति तत्कस्य हेतोः घटत्वद्रव्यत्वयो र्विरोधाभावात् । यदि चादित्यगतिप्राप्तयो र्यः सम्बन्धो नुमितिसितः स न क्वचिदपिप्रत्यक्षगोचर स्तादृशसंबन्धविशेषस्यान्यत्रासत्वा त्तर्हि वह्निमान् धूमादित्यादावपि अनुमित्साविषयपर्वताग्निसबन्धो पि न महानसादौ दृष्टचर इति तुल्यम् नच तादृशसंबन्धविशेषस्य महानसादावनुपलम्भेऽपि सामान्यतोऽग्निसबन्ध स्तावद्रूप

लब्ध एवेति वाच्यम् । तर्हि आदित्यगतिप्राप्त्योः सबन्धविशेषस्यानुपलम्भेपि सामान्यतो गति-प्राप्त्योः सबन्धस्य चैत्रादौ असकृदुपलब्धत्वात् । यत्तु कर्मणोनित्यानुमेयत्वेन प्रत्यक्षत्वा न्न चैत्रगतिप्राप्तिसम्बंधस्य प्रत्यक्षत्वम् तत्तुच्छम् । कर्मणः प्रत्यक्षत्वा दन्यथादेवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्येतिभाष्या-संगत्यापत्तेः । तस्माद्भाष्यकृन्मते कर्मणः प्रत्यक्षत्वमिष्टमेवेति एवं सामान्यतो दृष्ट-संबन्धत्वमपि संकीर्णम् यदि तु आदित्य-स्य देशान्तरप्राप्ति स्तदीयगति पूर्विका न दृष्टा किन्तुदेवदत्तस्य देशान्तरप्राप्ति स्तदीयगतिपूर्वि-कादृष्टेति देशान्तरप्राप्तिसामान्ये गतिसामान्य-स्य नियममवधार्या दित्यदेशान्तरप्राप्तावपि त-दीयगतिपूर्वकत्वमनुमीयत इत्यभिप्रायेण सामा-न्यतो दृष्टसंबन्धत्वं समर्थयसे तदा वह्नि-मान्धूमादित्यादावपि पर्वते धूमाग्निसंयोगो नावधतः किन्तु महानसे धूमाग्निसंयोग एवेति

धूमसामान्ये वह्निसामान्यान्वयानुगमादेव पर्वते प्यग्निरनुमीयते इति तुल्यमन्यत्राभिनिवेशात् । नच कादाचित्कत्वानुरोधेन कार्यमात्रस्यागन्तुककारणजन्यत्वनियमांगीकारा त्कादाचित्कत्वाद़ादित्यदेशान्तरप्राप्तिरपि कार्यमिति तस्या अपि किंचिदागन्तुकं कारणमस्तीति सामान्यतः कारणमात्रमनुमीयते नतु विशेषत इदं कारणमित्यस्य सामान्यतो दृष्टत्वं वह्निमान् धूमादित्यादौ तु वह्निरेवानुमीयते इति न तस्य सामान्यतो दृष्टत्वमिति वाच्यम् । गतिपूर्विकां देशान्तरप्राप्तिमुपलभे इति भाष्यविरोधापत्तेः तत्र गतिसामान्यान्वयस्यैव प्रदर्शितत्वात् तथाच द्वैविध्यमनुपपन्नमितिचे त्सत्यं भाष्यं तर्हि अन्यथाव्याख्येयम् । यदा कश्चि त्पुरुषः गोमयेन्धनप्रभमग्निं तादृशं च धूमं विलोक्येदृशोगोमयेन्धनप्रभवोग्निरीदृशश्चायं धूमइति व्यक्त्यन्तरेभ्यो विशेषमवधार्य देशांतरे कालांतरे तादृशेन धूमेन तादृशमग्निमनुमिमीते तदा तादृ-

शमनुमानं पूर्वदृष्टव्यक्तिसजातीयव्यक्तिविशे-
षविषयत्वा त्प्रत्यक्षदृष्टसबंधमुच्यते तथाच यत्र-
साध्यसाधनयो र्व्यक्तिविशेषयोः प्रत्यक्षेण
संबंधो गृह्यते तदनुमानं प्रत्यक्षतो दृष्टसंबंधम् ।
यत्र तु सामान्ययोरेव व्याप्ति गृह्यते तदनुमानं
सामान्यतो दृष्टसंबंधमुच्यत इत्येत त्तात्पर्येण
द्वैविध्यमनुमानस्योक्तं भाष्यकृता । अक्षरार्थो-
पीदृश एव प्रतीयते अन्यथा प्रत्यक्षसामान्ययो
र्मिथोविरोधाभावेन विकल्पानुपपत्तिः सामान्य-
संबंधस्यापि प्रत्यक्षग्राह्यत्वात् । प्रत्यक्षस्य प्रति-
पक्षः प्रमाणान्तरमेव न सामान्यं नचैवं प्रयुज्यते
प्रत्यक्षेण भवति सामान्येन वेति यत्रापि चैवं
प्रयुज्येत तस्याप्ययमेवार्थः प्रतीयते प्रत्यक्षविशे-
षेण प्रत्यक्षसामान्येनवेति सामान्यविशेषयोरेव
पक्षप्रतिपक्षभावो न प्रत्यक्षसामान्ययोरिति
भावः । ननु प्रत्यक्षतो दृष्टसंबंधस्य व्यक्तिविशे-
षानुमानार्थमेवाङ्गीकार्यं तथाच धूमाकृतिदर्शना-
दितिभाष्ये धूमसामान्याभिप्रायकाकृतिपदोपादा-

नमसंगतमिति चेन्न एतादृशभाष्यस्य सामान्यतो दृष्टसंवन्धानुमानपरत्वात् । न चैतादृशस्थलेपिसामान्यतो दृष्टसंबंधानुमानाभ्युपगमे एतदुदाहरणायादित्यगतिदेशांतरप्राप्तिपर्यन्तानुधावनं किमर्थम्। विशेषासंकीर्णसामान्योदाहरणप्रदर्शनार्थत्वा त्तादृशाभिधानस्य केचित्तु आकृतिपदम वयवसंस्थानपरं तथाच गोमयेन्धनप्रभवधूमविशेषदर्शना त्तादृशाग्निविशेषज्ञानमित्याशयो भाष्यकृतामत एव चोदाहरणद्वयं परस्परासंकीर्णं साधु संगच्छते इत्याहुः अत्रचानुमानप्रकारः पूर्वमेवप्रदर्शित इतिनेह पुनरुच्यते इत्यलमतिप्रसंगेन ।

इति कल्पकालिकायामनुमानपरिच्छेदः ।

भा०-शास्त्रं शब्दविज्ञानात् असन्निकृष्टेऽर्थे विज्ञानम्

शास्त्रंशब्दविज्ञानादसंनिकृष्टेर्थे ज्ञानमिति भाष्यम् । ननु प्रत्यक्षानुमाने निरूपिते तद-न

वान्तरप्रमाणभेदस्य शब्दस्य निरूपणमुचितं तदुपेक्ष्य शास्त्रस्य लक्षणाभिधानमप्रासंगिक मत्वान्तरधर्मप्रकारकज्ञानगोचरेच्छां प्रतिसामान्यधर्मप्रकारकज्ञानस्य कारणतया शब्दसामान्यलक्षणं बिना तदवान्तरभेदशास्त्रलक्षणस्यानाकांक्षितत्वात् सामान्यलक्षणाभिधानानन्तरं विशेषलक्षणाभिधानस्यैव सर्वत्र दर्शनाच्च। नच लक्षणमपि साधु शब्दमात्रगतत्वात्। शास्त्रलक्षण न्तु प्रवृत्ति र्वा निवृत्ति र्वा नित्येन कृतकेन वा पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत इत्येव प्रामाणिकैः स्वीक्रियते इति। न च वायु र्वै क्षेपिष्ठा देवतेत्याद्यर्थवादानां वस्तुस्वरूपमात्रकथनपराणामपि शास्त्रत्वम्। विधिवाक्यैकवाक्यतयैव तेषां शास्त्रत्वाङ्गीकारेण स्वातन्त्र्येण तत्वाभावादिति स्यादेतत् यद्यपि लिङादेरेव त्प्रवर्त्तकत्वमर्थ स्तथापि तावन्मात्रस्य प्रयोगाभावा त्तद्घटितस्य पदस्य प्रयोगेऽपि ततः कस्यचित्प्रवृत्तेरजननादर्थवादाद्युपन्यस्तंहितवाक्यघटकप्रत्य-

यस्य प्रवर्तकत्वेन शास्त्रत्वं न प्रत्ययमात्रस
नवा पदमात्रस्येति बोध्यमिति ।
अत्रोच्यते स्वतन्त्रवेदवाक्यव्याचिख्यासया प्रव
त्तस्य भाष्यकारस्य प्रकृतोपयोगिलक्षणकथनमे
युक्तं न शब्दमात्रस्य लक्षणाभिधानम् । अनु
योगात् । नहि लौकिकवाक्यदृष्टान्तेन वेदप्रामाण
समर्थनीयं येन तदपेक्षया तस्यापि लक्षणकरण
पेक्षास्यात् । नच तर्हि प्रत्यक्षानुमानयोरपि लक्
णकथनं न शोभते इति वाच्यम् । अर्थबोधोप
काक्षरश्रवणाय प्रत्यक्षस्योपयोगात् । नहि प्रत्य
णानवधारितवर्णराशिः शब्दादर्थं बोद्धुं शक्नो
नच रूपान्तरेण श्रुतः शब्दः साधुधियं जनयि
अनुमानस्यापि विश्वजिदादिफलकल्पनायामुप
गात् । नचैवं लौकिकवाक्यस्य प्रकृते कश्चि
योग इति न शब्दमात्रलक्षणं कृतं गामानयेत्या
लौकिकवाक्यस्य विधिप्रत्ययघटितत्वेऽपि न श
स्त्रत्वम् । लोके तथाव्यवहाराभावादेवंच धर
धर्मोपदेशपराणि चतुर्दशअष्टादश वा विद्यास

नानि शास्त्रत्वं लभन्ते यद्यपि शिष्यते ऽनेनेति शास्त्रं लौकिकवाक्यमपि वक्तुं शक्यते तथापि तादृशव्यवहाराभावात् पङ्कजादिपदवत्तेषु रूढ़मेव। ननु शब्दविशेषस्य शास्त्रस्य प्रामाण्यजननशक्तिः शब्दसामान्याधीनैव नतु स्वातन्त्र्येण तस्य शक्तिविशेषेमानाभावादिति शास्त्रस्यापि शब्दसामान्यशक्त्यधीनत्वाच्छब्दसामान्यप्रामाण्याय तल्लक्षणकथनमावश्यकं। तथाचोक्तं इन्द्रियादिव्युदासेन शब्दो यावन्न साध्यते तावन्न तद्विशेषस्य युक्तो नावसरो भवेदिति चेत्सत्यम् लक्षणकथनमावश्यकं किन्तुविशेषलक्षणकथनेन सामान्यलक्षणमर्थात्सिद्ध्यतीति विशिष्य तल्लक्षणं नाभिहितम्। प्रवर्तकं वाक्यं शास्त्रमित्युक्ते ऽर्थाद्गम्यते अप्रवर्त्तकंवाक्यंशब्द इति यच्चोक्तं शब्दमात्रगतत्वा ल्लक्षणमिदमतिव्यापकं तदपि न सामान्यवाचिनोः शब्दार्थपदयोः तद्विशेषचोदनाधर्माधर्मपरत्वात् तथाच चोदनाविज्ञानादसन्निकष्टे धर्माधर्मरूपे ऽर्थे ज्ञानमित्यर्थः तथाच

न लौकिकवाक्ये ऽतिव्याप्तिः तेषां धर्माधर्म-परत्वाभावात्। नचपूर्वं चोदनाप्रामाण्यं प्रतिज्ञातं त त्किमिदानीं शास्त्रस्याव्यभिचारित्वमुच्यते। शास्त्रचोदनोपदेशानामर्थान्तरत्वात्। प्रवर्तनासामान्यवाचकमपि चोदनापदं वेदाध्ययनानन्तरार्थकाथशब्दसमभिव्याहाराद् यथा वैदिकचोदनामात्रपरं तथा शब्दपदं शास्त्रपरं अर्थपदं च धर्माधर्मपरमेव तदन्तर्गतं च शास्त्रमिति बृत्तिकारोक्तौ शास्त्रपदं चोदनापरमेव तस्या एवाव्यभिचारित्वेनापरी क्ष्यत्वसम्भवात् प्रकृतोपयोगित्वाच्च। वैशेषिकादयः शब्दं पुनरनुमानेऽन्तर्भावयन्ति ननु यः शब्दः यस्यार्थस्य बुबोधयिषया प्रयुज्यते स तमेवार्थं बोधयति धूमादिलिङ्गन्तु स्वव्यापकमाज्यादिकमेव बोधयति नतु यत्किंचिदिति तयो वैलक्षण्या त्कथमनुमानमिति चेन्न हस्तचेष्टादिलिंगानामभिधायकपुरुषेच्छानुकुलयत्किंचिदर्थबोधकत्वेन बैलक्षण्याभावात् नच तथापि येन केनचिदुपपा-

दितं प्रदर्शितं च धूमादिलिंगं व्यापकमर्थमनुमापयति शब्द स्तु आप्तोक्त एवेति वैलक्षण्यं हस्तचेष्टादीनामप्याप्तकृतानामेव प्रत्यायकत्वेनाविशेषात्। अनाप्तस्य शब्द इव चेष्टापि नार्थनिश्चयजननी प्रतारणाया ऽन्यथा विनियोगसंशयात्। आप्तोक्तत्वहेतो भागासिद्धत्वञ्च वैदिकवाक्ये तदभावात् नच गृहीतव्याप्तिकस्यैव लिङ्गस्यानुमापकत्वं शब्द स्तु अगृहीतसबन्धोपि वोधको भवति स्वर्गापूर्वदेवतादौ तथादर्शनादिति वाच्यम् अर्थापत्यादिप्रमाणेन स्वर्गापूर्वादौगृहीतसंबन्धस्यैव प्रत्यायकत्वाभ्युपगमात्। नच शब्द स्तुल्याकारतयाऽर्थं बोधयति लिङ्गन्तु न तथेति वाच्यम्। प्रत्यक्षसूत्रे तन्निराकरणात् तुल्येनापि प्रतिबिम्बेन बिम्बानुमानदर्शनाच्च नचातिस्वच्छादर्शोदरप्रतिहतं चाक्षुषं तेजः परावृत्य मुखं गृह्णातीति प्रत्यक्षमेवेदं नानुमानमिति वाच्यम्। लौकिकानां तत्र प्रत्यक्षत्वासंप्रतिपत्तेः भूमिगतचरणचिह्नेनताद-

शगतानुमाने व्यभिचारस्य दुर्वारत्वाच्च अत्रो-च्यते पदस्य वाक्यस्य वा पदार्थबोधं प्रतिलिङ्ग-मुच्यते नाद्यः पदस्य केवलार्थविषयकतयाऽनु-मानस्य चविशिष्टविषयकतया तयोः समानविष-कत्वाभावात् नच कोस्तीति प्रश्ने देवदत्त इत्युक्ते अस्तिपदोच्चारणं विनापि केवलदेवदत्तपदादेव स्थितिविशिष्टदेवदत्तार्थबोधो दृश्यत इति पद-स्यापि केवलस्य विषयकत्वमस्त्येवेति वाच्यम् प्रश्नवाक्यस्थास्तिपदसंबन्धेनैव तस्य विशिष्टार्थ बोधकत्वेन केवलस्य तत्वाभावात्। एवं द्वारमि त्यादावपि पिधेहीति क्रियावाचकपदाध्याहारादेः तस्य विशिष्टार्थबोधकत्वमास्थेयम्। नच संख्या दिविशिष्टार्थबोधकत्वेन पदस्यविशिष्टविषयक त्वम्। अव्ययादौ तदभावात् जातेरेव पदार्थत्वेः तत्र संख्यादेरन्वयायोगाच्च। न द्वितीय विशिष्टवाक्यार्थस्यापूर्वत्वेन वाक्योच्चारणात्प्राग तदप्रत्ययेन धर्मिणोऽप्रसिद्धत्वात्। प्रमाणान्त रेणासिद्धो धर्मो व्यापकधर्मविशिष्टतया नुमाने

साध्यत इतिन्यायमार्गः वाक्योच्चारणानन्तर न्तु विशिष्टार्थस्य वाक्यत एवाधिगमो तत्कृतमनुमानेन वाक्येन हि यादृशविशिष्टार्थाधिगम स्ततो मात्रया प्यधिकस्य भानाभवात् । किंच पर्वतो वह्निमान् धूमादित्यादौ स्वतन्त्रप्रत्यक्षेण गृहीतस्य धर्मिणः स्वतन्त्रस्मृतेन वह्निना विशिष्टतया नुमानमिति विशेष्यग्रहणपूर्वकं विशिष्टग्रहणं यत्र तु न विशेष्यविशेषणयोः स्वातन्त्र्येण ग्रहणं नापि तत्पूर्वकमिति द्वयो र्भेदा न्नानुमाने ऽन्तर्भावः ननु तर्हि मास्तु अर्थः पक्षः स्वतन्त्रगृहीतः शब्द एवास्तु पक्षः स एव स्वतन्त्रस्मृतार्थेन विशिष्टः साध्यतामिति चेन्न शब्दसामान्यस्यानैकान्तिकत्वात् तत्तच्छब्दत्वस्य च प्रतिज्ञार्थैकदेशत्वात् । धर्मधर्मिणोरभेदात् । अपिच केन सम्बंधेन शब्दस्यार्थविशिष्टत्वं साध्यते न तावत्संयोगसमवायाभ्यां शब्दार्थयोः तदसंभवात् । नापि देशकालाभ्यामिदानीमुच्चरितरामरावणादिपदे तदभावात् । नहि यत्रदेशे काले

वा यः शब्दस्तत्र देशे काले च तदर्थ इति नियमः कस्यचिदभिमतः। अथ नार्थविशिष्टत्वं शब्दस्य साध्यते किंतु तादृशार्थप्रतीतिविशिष्टत्वमित्यतीताद्यर्थकप्रतीतेरिदानीमपिसत्वान्न दोष इतिचेन्न विशिष्टार्थप्रतीतेरेवानुमानफलत्वेन तस्यां जातायां फलाभावादेवानुमानाप्रवृत्तेः नच विशिष्टार्थबोधजननशक्तिः साधनीया तस्या अनतिरिक्तत्वे प्रतिज्ञार्थैकदेशता अतिरिक्तत्वेपि वाच्यशक्तेरिव वाचकशक्तेरपि आकृतावेव स्वीकारेण तस्याश्च व्यक्त्यभिन्नतया तद्द्वारेण सैव प्रतिज्ञार्थैकदेशतेति न पक्षधर्मत्वम्। नापि सपक्षान्वयः यत्र यत्र धूम स्तत्र तत्राग्निरितीव यत्र यत्र शब्द स्तत्र तत्रार्थइति नियमप्रदर्शनासम्भवात्। नित्यविभुत्वेन शब्दस्य सर्वदेशकालसंबन्धितया अर्थस्य चातथात्वात्। आकृतिरूपस्यार्थस्य सर्वदेशकालसंबन्धित्वेऽपि तस्य सर्वशब्दसाधारण्यात् सर्वशब्दा तसर्वार्थबोधापत्तिः। नचार्थज्ञाननियतं

शब्दज्ञानं अर्थज्ञानं विनाप्यव्युत्पन्नस्य पुरुषस्य शब्दज्ञानदर्शनात् । नचागृहीतशक्तिकात्पदा दर्थज्ञानाभावेपि गृहीतशक्तिकादर्थबोधो जायत एवेति तत्रार्थज्ञाननियतत्वं तादृशशब्दज्ञानस्यास्त्येवेति वाच्यम् । तादृशार्थबोधाय शक्तिकल्पनाया आवश्यकत्वेन त्वदीयान्वय कल्पनाया अनङ्गत्वापत्तेः शब्दे यावत् स्वाभाविकार्थप्रत्यायनसामर्थ्यं नज्ञायते ताव त्ततो नार्थप्रत्ययः ज्ञाते तस्मिन् तादृशार्थप्रत्यय स्तत एवोत्पद्यते इति शब्दज्ञानस्यार्थज्ञानान्वयकल्पना मृषैव । अर्थज्ञानशब्दज्ञानान्वयकल्पनातः पूर्वमेवार्थज्ञानस्य जातत्वात् तं प्रति तादृशान्वयज्ञानस्यानङ्गत्वात् । संबद्ध एवशब्दोऽर्थं प्रत्यायचतीति नानुमानम् । यदन्वयापेक्षमेवार्थं प्रत्याययति तल्लिङ्गं यथाधूमादि । शब्द स्तु अन्वयानपेक्ष एव स्वाभाविकशक्तिवशादर्थं प्रत्याययतीति नास्यानुमानत्वमिति विवेकः । किंच महानसादौ येन यादृशो ग्निसंयोगो दृष्ट स्तेन

तज्ज्ञानासंभवादिति ननु असंबन्धपदार्थेभ्यो वाक्यार्थबोधस्याभ्युपगमेऽप्रामाण्यं स्यादिति चेन्न असंबन्धप्रतीतेरपि प्रामाण्याभ्युपगमात् संबन्धस्य प्रामाण्यप्रयोजकत्वे राजाज्ञाभावात्। ननु अस्तु प्रमाणमप्रमाणं वेति विचारः प्रतीतिरेव इयमनुपपन्ना संबन्धानङ्गीकारे मैवं नहि दृष्टेऽनुपपन्नं नाम दृश्यते हि दूरदेशवार्तासु विज्ञातेभ्यः पदार्थेभ्यो वाक्यार्थबोधः आप्तोक्तिनिश्चयेन तत्प्रामाण्यविघातोपि न नच तेषां संसर्गोऽवगतः दूरदेशस्थत्वात् नच दूरदेशवार्त्तापरवाक्यप्रामाण्यमपि आप्तोक्तिनिर्णयानुमानाधीनमेवेति वाच्यम् प्रामाण्यनिश्चयस्य तादृशानुमानाधीनत्वेऽपि प्रामाण्यस्य तदधीनत्वाभावात् तावतापि तद्बुद्ध्युत्पत्ते रङ्गीकारात् आप्तत्वानाप्तत्वनिश्चयं विना तद्वाक्यार्थबोधे जाते पश्चादप्रामाण्यशंकाविधूननाय आप्तोक्तिनिश्चयोऽपेक्ष्यते नतु तादृशवाक्यार्थबोधोत्पत्तये नहि तत्सत्यत्वनिश्चय एव

तद्वाक्यार्थबोधः किन्तु भिन्न एवेति सत्यत्व-निश्चया त्पूर्वमेव तादृशवाक्यार्थबोध इत्यविवादं तथाच सत्यत्वनिश्चयस्या नुमानिकत्वेपि वाक्यार्थबोधस्य नानुमानिकत्व मिति स्पष्टमेव लभ्यते नच वाक्यार्थबोधोऽपि आप्तवचनत्व-हेतुक एव भवति आप्तोहि यथार्थवादित्वेना-सकृदुपलब्धः तथाच वर्त्तमानवचनेऽपि एवमनु-मीयते एतद्वचनं वाक्यार्थबुद्धिपूर्वक माप्तोक्तत्वा त्पूर्वतद्वचनवत् यद्वा एते पदार्था मिथः संसर्गवन्तः आकांक्षायोग्यतासन्निधिवत्वे सति पदार्थत्वादिति न आप्तस्यापि कदाचिद न्यार्था-भिधित्सया भ्रमादिभिः पदान्तर प्रयोगदर्शनेन व्यभिचारात् नहि भ्रमप्रयुक्ततादृशवाक्यस्य तद्बुद्धिपूर्वकत्व मनाप्तत्वापत्ते नच यः कदाचि-दपि नान्यथा वदति स एवाप्तपदेन गृह्यते इति वक्तुं शक्य मेतादृशपुरुषरत्नस्य लोके अभावाद् भ्रान्तेः पुरुषधर्मतया शब्दप्रयोगस्य विरल-विषयत्वापत्ते र्निर्विषयत्वापत्ते र्वा प्रकृतवाक्य-

यथार्थज्ञानवत्त्वरूपाप्तत्वस्य प्रकृतवाक्यार्थबोधो-त्तरकालिकत्वेन हेतुत्वासंभवात् एवमुत्तरानुमाने-प्यनाप्तवाक्ये नद्यास्तीरे पञ्च फलानि सन्तीत्यादौ व्यभिचारः स्फुटः तस्मादाप्तानाप्तसाधारणवाक्य-श्रवणसमनन्तरं वाक्यार्थबोधो दृश्यमानः शाब्द एव नानुमानिकः त्रिलक्षणलिंगजन्यत्वाभावात् अतः प्रमाणान्तरमेव शाब्दं नानुमानिक मिति-सिद्धम् । ननु तथापि असंबद्धेभ्यः पदार्थेभ्यो वाक्यार्थबोधो जायते इति बुद्धौ नाधिरोहति तथा प्रतिपत्तिप्रकाराप्रतिपादनादिति चेत्सत्यं तादृशः तकारो न प्रतिपादितः इदानीं स प्रतिपाद्यते तदित एवावहितेना धिगम्यताम् भावनावाचकशब्द स्तावल्लोकवेदयो रविशेषं भावनां स्मारयति नात्र कस्यचिद्विप्रतिपत्तिः नच यजेत पचेत इत्यादौ भावनावाचको धातुः प्रत्ययो वेति निर्णायो न सुलभः बहुविदा मत्र विवाददर्शना दिति वाच्यम् अन्वयव्यतिरेकाभ्यां भावना आख्यातवाच्येति निर्णायस्य सुलभत्वात् ।

यजते पचते इत्यादावाख्यातसत्वेन भावना-
प्रतीयते इति भावनाख्यातयोरन्वयः यागः पाक
इत्यादौ आख्यातविरहान्न भावनाप्रत्यय इति
तयो र्व्यतिरेकः धातुना सह नैकांततोन्वयः या-
गपाकादौ सत्यपि धातौ भावनाप्रतीतिविरहान्न
भावना धात्वर्थः अन्यथा अत्रापि तत्प्रत्ययापत्ते
रित्येके अन्ये तु न केवलाख्यातप्रत्ययो भावना-
वाचकः स्वातन्त्र्येण तत्प्रयोगाभावा त्तेनैवान्वय-
ग्रहणायोगात् किन्तु तत्समभिव्याहृते धातावेव
तत्रापि धातावेव शक्तिराख्यातसमभिव्याहारो
ऽभिव्यञ्जक इति न यागपाकादौ तत्प्रतीति
रभिव्यञ्जकविरहादित्याहुः समुदायेनैव सहा-
न्वयव्यतिरेकदर्शना त्प्रकृतिप्रत्ययसमुदाय एव
भावनावाचक इत्यपरे यागपाकादौ सत्यपि
धातौ भावना न प्रतीयते अस्ति भवतीत्यादौ
सत्यप्याख्यातप्रत्यये भावना न प्रतीयते इति
यजेत पचेतेत्यादौ समुदायेनैवान्वयव्यतिरेकौ
भावनावाचकत्वनिर्णायकौ एतन्मते साध संग-

च्छेते इति द्रष्टव्यम् । ननु भावनावाचकत्वनि-र्णयो न सुलभ इति यदाशङ्कितं तदेवापन्नं तद्विवेकोपायाभावादिति चेदापततु तदेव किन्तद्विवेकेन नो प्रयोजनं धातु र्वाऽऽख्यातप्र-त्ययो वा विशिष्टो वा वाचकः सर्वथा यजेत इत्यादौ भावना प्रतीयते इत्यविवाद मेतावतैव नः प्रयोजनमुपपद्यते तथाहि यजेत स्वर्गकाम इत्यादौ प्रतीयमाना भावना साध्यं साधनमिति कर्तव्यतां च सामान्यत आक्षिप्य तद्विशेष मन्य तोभिकाङ्क्षति निष्पन्ने कामनाविरहा त्कामि-पदसमभिव्याहारेण कामनाविषयत्वेन प्रतीय-मानः स्वर्गसाध्यतया वगतो भावनामपेक्षते तथाच साध्यसाधन मपेक्षमाणयोः स्वर्गभाव-नयो र्योग्यत्वसन्निधिबलेन परस्परमन्वयो ज्ञायते ततः साध्यांशलाभेन तदंशे निरपेक्षा साधनमपेक्षमाणावतिष्ठते एव स्वसाधनं च न धात्वर्थातिरिक्तं किंचिद् यदपि गोदोह-नेनापः प्रणयेदि त्यादौ गोदोहनादीनां भाव-

नाङ्गत्वं श्रूयते तत्रापि न तेषां स्वरूपेण किन्तु प्रयाजनादिधात्वर्थोपरागेणैवेति धात्वर्थ एव तत्साधनं सोपि यागादिः करणत्वबोधकतृतीयादिविभक्तिविरहेऽपि स्वभावतो भावनया करणत्वेन संबन्ध स्तद्द्वारा फलमपेक्षते साधनस्य-साध्यांशे उत्थिताकाङ्क्षत्वात् नच भिन्नपदोपात्तस्वर्गापेक्षया समानपदोपात्तत्वेन सन्निहितत्वाद् धात्वर्थस्यैव साध्यत्वेन भावनाया मन्वयः किन्न स्वीक्रियते इति वाच्यम् विलष्टं कर्मेति न्यायेन धात्वर्थस्य यागादेः पुरुषार्थत्वाभावेन फलत्वासंभवादिति साधनं स्वरूपेणैवोपतिष्ठते यागेन भावयेदिति यागेन किं भावयेदित्यपेक्षा भावनान्वयेप्यस्त्येवेति योग्यत्वादिप्रत्यासत्तिनिमित्तः स्वर्गयागयोः संबन्धः स्वीक्रियते यागेन स्वर्गं भावयेदिति ननु कथं यागस्य करणत्वेनान्वयः तद्बोधकतृतीयाविभक्तिविरहादिति चेन्न करणत्वस्य तृतीयाविभक्तिव्याप्यत्वानङ्गीकारात् तन्निर्णायकप्रमाणसत्वे तृतीयाविभक्तिविरहस्या-

किंचित्करत्वात् नच तृतीयार्थसद्भावे किमिति सा नोत्पन्ना प्रातिपदिकत्वाभावादिति गृहाण नहि तदुत्पत्तौ तदर्थसद्भाव एव नियामकः प्रातिपदिकसंज्ञाया अपि तन्नियामकत्वात् प्रातिपदिकसंज्ञा च तद्विधायकसूत्रे ऽधात्विति पर्युदासान्न भवतीति यागेनेत्यत्रेव यजेदित्यादौ न सा यजेतेत्यादिविधिवाक्यसामर्थ्यलब्धयजिकरणत्वस्य प्रयोगाभावेन तृतीयान्तयजिना व्याकर्तुमशक्यतया कृत्यप्रत्ययान्तेन यागेन स्फुटीकरणमिह बोध्यम् एवं प्रयाजादीनामपि कथंभावापेक्षया भावनया संबन्धो बोध्यः फलोपायमात्रापेक्षित्वाद् भावनायाः उपायश्च कश्चित्स्ववाचकपदेनोपात्तो यथा यागादिः कश्चिच्च पदान्तरेणोपात्तो यथा प्रयाजादिः अस्यापि साध्यापेक्षित्वाद् भावनाद्वारा स्वर्गादिरूपफलसंबन्धो बोध्यः पदवाक्ययो रपि परस्परापेक्षितत्वात् विश्वजिदादिव न्नादृष्टस्वर्गकल्पना तदापेक्षयाप्रत्यासत्तिवशेन फलवद्भावनांशकरणानुग्रहस्यैव

न्यायत्वात् स्पष्टीभविष्यति चैतत्प्रकरणाधिकरणे इति। ननु भावनान्वयिनां साध्यसाधनादीनां कथं मिथोन्वयः मिथोन्वये वा कथं भावनान्वयः उभयत्रान्वयाभ्युपगमे वाक्यभेदापत्ते रिति चेत्सत्यम् प्रथममेकस्यामेव भावनायां साध्यसाधनेतिकर्त्तव्यतानामन्वयः पश्चात्तेषा मुपकार्योपकारकभावेन परस्परमन्वयः करणं साध्यस्योत्पत्युपकारं करोति इति कर्त्तव्यतानुकरणस्य फलजननसामर्थ्य मिति तयोर्भेदः साध्यमपेक्षमाणा भावना तेनान्विता सती न स्वरूपेण साधनमपेक्षते किं साधनमिति किन्तु फलोपरक्तसाधनत्वेन किमेतत्फलसाधनमिति एवमितिकर्तव्यतापि न स्वातन्त्र्येण भावनायां साकांक्षा केन फलं भावयेदिति किन्तु साधनोपरक्तरूपेण कीदृशेन व्यापारेणेदं साधनं फलजननसमर्थं स्यादिति तथा च न वाक्यभेदः साध्यसाधनोभयांशविशिष्टभावनायाःस्वर्गादिफलं प्रति विधानादिति एवं मामानय शक्लामित्यादा वेका—

नयनक्रियान्वितयोः गोशुक्लयोः परस्परसंबन्धावि-
च्छेदेनैवा नयनक्रियाया मन्वयः नच जाति-
गुणोभयाश्रितद्रव्यस्यै वानयनक्रियायामन्वयो
जातिगुणयो रिति कथं तयोरेकक्रियान्वयित-
यैकवाक्यत्व मित्थम् शुक्लो गौरित्यादौ गो-
त्वजाति र्यादृशगवादिव्यक्तिं परिच्छिनत्ति
तादृशी मेव शुक्लगुणोपि इत्युभय मेकाश्रय
परिच्छेदकत्वेना नयनक्रियाया मन्वेतीति
जातिविशेषणत्वं गुणस्योपपद्यते इति। ननु-
गोत्वशुक्लत्वयोरेकाश्रयकत्वे सिद्धे तादृशाश्र-
यद्वारा तयोर्मिथः संबन्धः स्यादपि तदेव तु न
सिध्यति साधकाभावात् नचैकानयनक्रियान्वयः
साधकः एकद्रव्याश्रयत्वे एकक्रियान्वय स्त-
स्मिन् एकद्रव्याश्रयत्व मिति परस्पराश्रयात्
नैव मत्रहि आनयनक्रियाप्रधानभूता गोत्वशु-
क्लत्वाभ्या मवरुद्धा अतज्जातीयमतद्गुणकं
चाश्रय मनपेक्षमाणा श्रुतौ गोत्वशुक्ला वेक-
स्मिन्नाश्रये नियमतो ऽपेक्षते इत्यरुणाधिकरणे

वक्ष्यमाणत्वात् किंच जातिविनियोगे भवतीदृशी जिज्ञासा किं गुणकं द्रव्यमनया जात्या परिच्छेत्तव्यं तथा गुणोऽपि कीदृग् जातिविशिष्ट मनेन परिच्छेत्तव्य मिति द्वयोः श्रुतत्वा त्परस्परसंबन्धेऽतीवोपकार इति मिथः संबन्धाज् जात्यन्तरगुणान्तरव्यवच्छेदः पदा त्साक्षादप्रतीयमानोपि अर्थादेव फलति नह्यस्ति संभवो यच्छुक्लगुणेन सहैकानयनादिक्रियाया मन्वितस्य गोत्वस्य नीलगुणादिभिःसंसर्गः वस्तुतो गोत्वं न नीलादिव्यावृत्तं स्वरूपेण तत्रापि सत्वात् किन्तु शुक्लो गौरानीयता मिति वाक्यस्य नीलाद्यसंकीर्णगोत्ववृत्तिरेव निलादिव्यवच्छेद इति ध्येयम् । स्वतोऽसंबद्धानां पदाना मेकक्रियासंबन्धा देकवाक्यत्वं क्रियाद्वारा एषां परस्परसंबन्धे सिद्धे यद्यपि पदार्थाः अनेकवाक्यार्थगामितया अनियता स्तथापि तत एव संबन्धान्मिथो व्यवच्छिन्नत्वेन प्रतीयन्ते इति तैर्नियमेनैकवाक्यार्थावगति र्जायते

तथाहि यत्र गामानय शुक्लामिति वाक्यं प्रयुज्यते तत्र गामिति द्वितीयान्तपदेन गोः कर्मत्व मुच्यते तच्च यत्किंचिद् योग्यक्रियानिरूपितं नत्वा-नयनक्रियानिरूपित मेव अन्यत्रापि तत्प्रयोग-दर्शना त्तथा आनयति रपि आनयनमात्र-मभिधत्ते तच्चानयनं गवाश्वव्यक्तिसाधारणं लक्षयति नतु गवानयनमेवा न्यत्रापि तत्प्रयोग-दर्शना देवं शुक्लामित्यपि शुक्लगुणं यांकाश्चि-द्व्यक्तिं नतु गोव्यक्तिमेव तत एव मिथः संब-न्धात्तु गामिति यां व्यक्तिं गोकर्मत्वेन बोधयति आनयति रपि तत्कर्मिकामानयनजातीयां क्रियां लक्षयति शुक्लपदमपि तामेव शुक्लगुणकत्वेन बोधयतीति गोशुक्लानयनैः समुदिते विशिष्टे एकस्मिन् बोधिते गोत्वजाति रानयनक्रियाति-रिक्तक्रियातः शुक्लगुणातिरिक्तगुणतो व्यव-च्छिन्ना आनयतिक्रियापि गोत्वातिरिक्तजाति-तश्शुक्लगुणातिरिक्तगुणतः शुक्लगुणो जात्यन्त-रात् क्रियान्तराच्च व्यवच्छिन्नः प्रतीयते इति

नियतैकवाक्यार्थबोधः संपद्यते इति यद्यपि प्रत्यासत्तिवशेन समानप्रत्ययोपात्तां भावना मेव विधि विधातुं शक्नोति नेतरांशं विप्रकर्षात् तथापि अपरिपूर्णत्वा त्तावन्मात्रस्य विधाने ऽनुष्ठेये कर्मणि पुरुषप्रवर्त्तकत्वं विधे र्न स्यात् साध्यसाधनसंबन्धं विना भावनामात्रेण पुरुष-प्रवृत्ते रशक्यत्वा दित्यतो योग्यतादिवशेन साध्यसाधनेतिकर्त्तव्यताविशिष्टैव पूर्णा भावना विधीयते पुरुषप्रवर्तनानुरोधा दिति दिक्। एव मुत्सर्गनिपातानां मपि स्वातन्त्र्येण प्रयोगाद-र्शनाद् द्योतकत्ववाचकत्वविवादेऽपि वाक्यार्थ-बोधोपयोगितया र्थवत्त्वमस्त्येव नहि स्वातन्त्र्येण प्रयोगदर्शनमेवार्थवत्त्वे नियामकम् स्वादीना मर्थवत्त्वस्य सर्वसंमतत्वात् तेषां च न स्वातन्त्र्येण प्रयोगः केवलानां प्रयोगस्या साधुत्वात् आपि-ङ्कलः प्रवया वृक्षःप्लक्षश्चे त्यादा वितरसमभि-व्याहारे एषा मर्थवत्त्वं स्पष्टमेव लभ्यते आङादिसमभिव्याहारे ईषदाद्यर्थप्रतीति स्तद-

समभिव्याहारे तदर्थाप्रतीति रित्यन्वयव्यतिरे-
कसद्भावात् तत्र षद्यादयः साक्षान्नाम्नैव संब-
न्धमनुभवन्ति ईषत्पिङ्गल आपिङ्गल इति यथा
प्रादयस्तु क्रियाद्वारेण प्रगतं वयो यस्य स प्रवया
इति यथा क्वचिच्च प्रकृष्टत्वाभिमुखत्वादीना
मितिकर्तव्यतया भावनायां विधान मनुष्ठानं
च यथा प्रवयसे दक्षिणां दद्याद् भिक्रामं जुहोती
त्यत्र । ननु प्रतिष्ठते इत्यादौ स्थाधात्वर्थगति-
निवृत्तिविपरीतप्रस्थानार्थबोधकप्रादीनां कथं
धातुसंबन्ध स्तदर्थलापकत्वात् सत्यं नेदृशार्थका
धातुविशेषणं किन्तु एते धातुभागसमा एव
समुदितस्य प्रतिष्ठने गमने शक्ति रत्वकर्णोव-
न्नतु स एव धातुरुपसर्गसहितः किन्तु स्थितौ
प्रतिष्ठिति रन्य एव द्वयो रर्थभेदात् एकत्वे तु
प्रोपसृष्टादपि स्थाधातो गतिनिवृत्तिबोधः स्या-
न्नचैवं दृश्यते तस्मादन्य एव यद्यपि एक-
स्यैव धातो स्तादृशार्थद्वये शक्तिरिति स्वीका-
रेऽपि उपसर्गस्यार्थविशेषद्योतकत्वेन प्रशब्दश्रवण-

ऽपेक्षायां गते ऽन्यत्र तन्निवृत्ते र्बोध इति मानुपपत्ति रापत्तिर्वा तथापि वृत्तिद्वयकल्पनापेक्षया समुदायशक्तिकल्पन मेवोचित मेवं सति अन्वयव्यतिरेकावपि सुखेनोपपद्येते इति बोध्यम्। नचोपसर्गाणां धातुभागत्वे पृथगुपादानं किमर्थं प्रातिष्ठत प्रातिष्ठिपदित्यादा वुपसर्गा त्पूर्वमडादिव्यावृत्तये नामत्वेन तेषां पृथगुपादानात् एवं प्रलम्बति रपि लभ्यते ऽन्य एवेति। द्योतकतावादिन स्तु एकस्यैव धातो स्तत्तदुपसर्गवशेन भेदस्वीकारे शक्ततावच्छेदकादीनां भेदेन तत्र तत्र शक्तिकल्पनायां गौरवं स्यादिति स्थाधातोः क्रियासामान्ये शक्तिः क्लृप्तैव केवलं प्रादिसमभिव्याहारे क्रियाविशेषे शक्तिः कल्पनीया प्रशब्दविशिष्टस्य क्रियाविशेषवाचकत्वे तु प्रशब्दे सामान्ये विशेषे च शक्ति रक्लृप्तैव कल्पनीया स्यादिति द्योतकत्वे एव लाघव मित्याहुः। ननु द्योतकत्वस्वीकारे प्रतिष्ठते इत्यादौ प्रादेः कथं विशेषणत्वं विशेषणं हि विशेष्यार्थ मत्या-

जयत् विशेषे पर्यवस्थापयति नीलोत्पल मित्या-
दौ तथादर्शना न्नहि नीलं स्वार्थात्प्रच्याऽव्यो-
त्पलपद मर्थान्तरे ऽव्यवस्थापयति किन्तु स्वार्थ-
विशेषे एव प्रादिस्तु अर्थान्तरे धातुं ऽव्यवस्थाप-
यतीति चे त्सत्य मेषां धातोः शक्त्यन्तराभिऽव्य-
ञ्जकत्वेनैव विशेषणत्वादित्यन्यत्र विस्तरः ।
अथास्तु उपसर्गादे रेवं शब्दसंबन्धः वस्तुस्व-
रूपविरुद्धविकल्पप्रतिषेधादिबोधकस्य नञादेः
कथं शब्दान्तरेण संबन्धः सदात्मना निरूपितस्य
तदानीमेवा सद्भावेन निरूपयितुमशक्यतया
संबन्धद्वाराभावादिति चेदत्रोच्यते नञर्थ
स्तावत्त्रिविधः पर्युदासो ऽभावः प्रतिषेधश्च
तत्राद्योऽब्राह्मणानीत्यणादौ नाम्ना संबद्धेन नञा
ब्राह्मणभिन्नः क्षत्रियादिः धातुसंबद्धेन नेक्षेतो द्य-
न्तमादित्य मित्यादौ तेनेक्षणविरोध्यनी-
क्षणसंकल्पश्च वस्तुस्वरूप एव प्रतिपाद्यते
तत्र वस्त्वन्तरप्रतिषेधो वस्त्वन्तरानुगुण
एव सर्वस्य परस्पराभावात्मकत्वात्

यत्र चाख्यातेन नञः संबन्धो नास्ति नासी न्न भविष्यतीत्यादौ निवृत्यात्मा ऽभावो-र्थ स्तत्रापि न वस्त्वभावः नञा क्रियते किन्तु संशयाज्ञानविपर्ययमात्रनिवृत्तिः घटोऽस्ति नास्ति वेति सन्देहे सति घटो नास्ती त्युक्त्या पाक्षिका-स्तित्वबुद्धि निवर्तते अथवास्तित्वबुद्धिनिवृत्ति रपि साक्षान्न क्रियते किन्तु घटो नास्तीति कथिते विरोधादस्तित्वबुद्धिः स्वयं निवर्तते एव मज्ञा नविपर्ययवारण मप्यत्र यस्य तत्र घटनास्तिता-ज्ञानं नास्ति किम्वा घटास्तित्वबुद्धिरेव विपर्यय-रूपास्ति तं प्रति तत्र घटोनास्तीत्युक्त्या तद-ज्ञानविपर्ययौ निवर्त्तेते तदेव मज्ञानादिवारणं प्रत्यक्षस्थलेऽपि दृष्टमेव यथायं स्थाणुरिति ज्ञाने जाते स्थाणु र्वा पुरुषोवेति सन्देहः पुरुष एवेति विपर्ययः स्थाणो रज्ञानं च निवर्तते तथा नञो-ऽपि प्रमाणत्वा त्ते निवर्तन्ते इति न कश्चिद्विशेषः नचाभाव स्तुच्छात्मा न कश्चिद्वस्तुविशेषो ऽय-मेवच नञोर्थ इति कथ्यते तथा चानर्थकत्व मे-

चैतस्येति कथं पदान्तरेण समभिव्याहारः स्या-
दिति वाच्यम् अभावस्य वस्तुत्वं पूर्वमेव प्रति-
पादित मित्यभावार्थकस्य नञो घटादिपदवदन-
र्थकत्वाभावात् नचाप्राप्तस्य प्रतिषेधायोगा त्प्राप्त
स्यैव प्रतिषेधो वाच्य, स्तथाच प्रमाणान्तरेण
प्राप्तस्य कथं प्रतिषेधः विरुद्धयो र्भावाभावयो
रेकत्र समुच्चयासंभवादिति चेत्क एवमाह विधा-
यकेन संबन्धाभावा न्नञः प्रतिषेधविधायकत्वा-
नङ्गीकारा दभावस्वरूपमात्र मनेन कथ्यते अत्र-
च्च न प्राप्ते रुपयोगो ऽप्राप्तस्यैव घटादे रभावो
घटो नास्तीत्यनेन बोध्यते इति। नन्वेव मपि सद्-
र्थवाचिना घटशब्देना भाववाचिनो नञः संब-
न्धो न घटते सृष्टिप्रलययोरिव विरुद्धार्थकत्वा न्दिति
चेद्भवेदेवं यदि घटपदं सत्वेन घटं बोधयेत्त-
त्तु नाभ्युपगम्यते किन्तु सत्वासत्वोदासीनं घट-
स्वरूपमात्रं बोधयति घटश्च प्रादेशिकः क्वचि-
त्सत्वेन वर्तते क्वचिदसत्वेनेति सत्वासत्वोभय-
साधारणं घटसामान्यं घटपदाभिधेय मतएव

घटोऽस्ति घटो नास्ती त्युभयविधः प्रयोगः स-
ङ्गच्छते ऽन्यथा सत्वेन घटस्य तत्पदाभिधेयत्वे
घटोऽस्तीति प्रयोगो न स्यादुभयोः सत्वार्थकत्वेन-
पौनरुक्त्यापत्ते रेवमसत्वार्थकत्वेन तदभिधेयत्वे
घटोनास्तीत्यपि न स्या त्तत एवेति बोध्यम् नच
भवन्मते जातेरेव पदार्थतया तस्याश्च नित्यत्वे-
न कदाचिदपि नासत्व मिति कथं सत्वासत्व-
साधारणत्वं कस्यचिदपि जातौ सत्वासत्वविव-
क्षाविरहा-त्तदुपलक्षितव्यक्तितात्पर्येणैव तदुभय-
प्रयोगदर्शना त्तदभिप्रायेण तथोक्ते रेवं च श्रु-
तायां जातौ नास्तित्वतात्पर्येण नास्तीति प्रयो-
गाभावाद् व्यक्तितात्पर्येण तादृशप्रयोगसत्वे-
ऽपि तस्या अश्रुतत्वा न्न विरोधगन्धोपी त्यपर-
मनुकूलम् नच यत्र घटोस्तीत्यनेन पूर्वं सत्वे
घटं प्रदर्श्य पश्चात्तदसत्वबोधनाय घटो नास्ती-
ति प्रयुज्यते तत्र विरोधा त्कथमुभयविधः प्रयोग
इति विवक्षाभेदेन तदुभयोपपत्तेः तथाहि यत्र
घटोस्ती त्यनेन घटसत्वं प्रतिपाद्य पश्चा न्नास्ती-

त्यनेन तदसत्वं प्रतिपाद्यते तत्र तयो नैकवाक्य-त्वं किन्तु घटसत्वप्रतिपादकं घटोऽस्तीत्येकं वाक्यं तदसत्वप्रतिपादकं घटोनास्तीत्यपरं वाक्यं तथा च घटोऽस्तीत्येतद्वाक्यजन्यज्ञानस्य घटोनास्तीत्येतद्वाक्यजज्ञानेन बाध एव भवति यथा शुक्तिशकले इदं रजतमिति जातस्य ज्ञानस्यो-दीच्येन नेदं रजतमिति ज्ञानेन बाध इति न विरोधः अथवा भ्रान्त्या घटसत्व मवगच्छता घटोस्तीति वाक्यं प्रयुक्तं भ्रान्त्यवगतं सत्व मेवैत द्वाक्य मनुवदति पश्चात्तदभाव मधिगत्य भ्रान्तिप्रसक्ततत्सत्वापनोदाय घटोनास्तीति प्रयुज्यते पूर्वं भ्रान्त्याऽवगतो यो घटः स वस्तुतो नास्तीति एवंच नानयो र्विरोधः भ्रान्तिप्रतिपन्न-सत्वेन वास्तविकासत्वस्य विरोधाभावात् नहि शुक्तिशकले भ्रान्तिप्रतिपन्नस्य रजतसत्वस्य पारमार्थिकेन तदसत्वेन विरोधः कल्पितत्वाद् रजतसत्वस्येति अथवा कालभेदादुभयोर विरोधः घटोस्ति इति वाक्यं पूर्वकाले घटसत्वं बोधयति

घटोनास्ती त्येतद्वाक्य न्तु तदुत्तरकाले तदसत्वं बोधयति पूर्वकाले गृहीतो यो घटः स इदानीं नास्तीति तथा च भिन्नविषयतवा न्नानयो विरोधः विषयभेदश्च कालकृत इति । ननु यत्र न हन्या न्न पिवेदित्यादौ विधिना नञः संबन्ध स्तत्र विरोधो दुर्वार एव प्रकारान्तरेण प्राप्तस्यैव प्रतिषेधो वक्तव्यो ना प्राप्तस्य विधिवैयर्थ्यापत्तेः हननपानादिप्राप्तिश्च रागादेव स्वीकार्या वचनप्राप्तस्य वचनेन बाधायोगा च्छास्त्रद्वयप्रामाण्याय तत्र विकल्प एवेति सिद्धान्तात् तथाच रागप्राप्तयोर्हननपानयो रभावं कथं नञ् बोधयेत् यदि वस्तुतः पुरुषेण हननं पानं वा कृतं तदा अनुष्ठितस्य हननस्य पानस्य च सत्ता जातैवेति कथं तदभावः शक्यते वक्तुं यदि वा न हननपाने प्रवृत्त स्तदा प्राप्त्यभावा त्प्रतिषेधानर्थक्य मित्युभयतः पाशा रज्जु रिति चेदत्रोच्यते यथा पचति न पचति पक्ष्यति न पक्ष्यतीत्यादीनां यथावस्थि-

तभावाभावगोचरत्वेन सत्यत्वं मिथ्यात्वं च भवति तथा न विधिनिषेधबोधकवाक्यानां यथावस्थितभावाभावबोधनाय प्रवृत्तिः यत स्तद्वदेव सत्यत्वं मिथ्यात्वं वा स्यात् किन्तु अन्यादृशी प्रवृत्तिः विधि कृतिसाध्येष्टसाधने तद्विषयकानुष्ठानसंकल्पं जनयन् पुरुषं प्रवर्तयति विधिरेव विधेयस्येष्टसाधनभावे प्रमाणं च भवति एवं निषेधोऽपि अनिष्टकर्मणि स्तद्विषयकाननुष्ठानसंकल्पं कारयन् पुरुषं निवर्तयति स्वयं च तस्यानिष्टसाधनभावे प्रमाणीभवति अभावं व्यवस्थापयति च तथाच प्रतिषेधेषु रागादिप्राप्तहननपानादिकर्तव्यतारूपविध्यर्थोलिङा अनूद्य यदि नञा प्रतिषिध्यते यदि वा नञर्थो वर्जनरूपः प्रतिषेधो लिङा विधीयते उभयथापि हननपानादिव्यापारस्या निष्टसाधनत्वबोधना त्तदननुष्ठानसंकल्पजननेन विरोधान्निराकरणं साधु संगच्छत इति न विरोधशंकालेशोपीति ध्येयम् विकल्पविरोधेपि अनयैव रीत्या

निराकरणीयः विधिनिषेधविषये भवन् विकल्पोऽपि विधेये इष्टसाधनत्वबोधनद्वारा तत्र पुरुषं प्रेरयति प्रतिषिद्धे ऽनिष्टसाधनत्वबोधनद्वारा तद्विषयकानुष्ठानविरोधिसंकल्पजननेन ततो निवर्तयतीति न नञो विधिसमभिव्याहारे काचिदनुपपत्तिः ननु विधिनिषेधयोः प्रेरणानिवारणबोधकयो भिन्नविषयत्वाद् माभूद्विरोधः प्रेरणनिवारणोभयकार्यकारिणो विकल्पस्य स्वात्मनैव विरोधः स्फुटः प्रवृत्तिनिवृत्त्यौपयिकार्थद्वयकरणाद् वाक्यभेदश्च कथं तदेवेष्टसाधनत्वेनानुष्ठेयं तदेव चानिष्टसाधनत्वे नाननुष्ठेयमिति शक्यं प्रतिपत्तुम् एकं प्रति तदेकस्य युगपदिष्टसाधनत्व मनिष्टसाधनत्वं च कोऽविकलवाचा बोधयेत् प्राप्तस्य प्रतिषेधः अप्राप्तस्य तु विधानं नहि निषिषेधयिषया तदेव प्राप्तं विधित्सया च तदेवाप्राप्त मिति शक्यं वक्तुम् युगपदेकत्र प्राप्त्यप्राप्त्यो विरोधादिति चेन्न युगपद्विरोधेऽपि कालभेदेन विधिनिषेधयोः

समावेशेन विरोधाभावात् एवं च न वाक्यभे-दोपि विकल्पो हि कदाचि त्प्रेरयति कदाचि न्निवर्तयति यदाच प्रेरयति तदा तदनुकूल एव वाक्यार्थः यदा चासौ निवर्त्तयति तदा निवृ-त्यनुकूल एव वाक्यार्थ इति सकृदुभयानुकूलवा-क्यार्थाकरणा न्न दोषः एव मनुष्ठानमपि नाशक्यं पर्यायेण तदुभयानुष्ठानस्य कर्तुं शक्यत्वात्सकृदनुष्ठानस्य चाबोधनात् । स्थाणु-र्वा पुरुषो वा याति न यातीत्यादौ तु न विकल्पः परिनिष्ठिते वस्तुनि विकल्पासंभवात् किन्तु सन्देहमात्रकथनाय तथाप्रयोग इत्यल मति-प्रपञ्चेन तस्मा त्पदैः पदार्थाः प्रतिपाद्यन्ते प्रतिपादितैश्च पदार्थै र्वाक्यार्थबोधः सम्पद्यते इत्येवमार्गः पदानां क्रियार्थेन समाम्नायो न तत्स्वरूपप्रतिपिपादयिषया तत्स्वरूपाणां प्रमा-णान्तरसिद्धत्वात् किन्तु वाक्यार्थबुबोधयिषयेति अभिधावृत्तेः पदार्थोपस्थापकत्वेन क्षीणत्वेऽपि तात्पर्यवृत्तेर पर्यवसाना त्तत एव वाक्यार्थः

पदार्थप्रतिपादनन्तु अवान्तरव्यापारः पाके काष्ठानां ज्वाला इवेति युक्तं तेषां क्रियावाचक-पदेन सह समभिव्याहार इति तस्मा त्सुष्ठूक्तं सूत्रकृता क्रियार्थेन समाम्नाय इति । ननु वाक्यार्थबोधमात्रे यदि क्रियावाचकपदेन सह पदानां समाम्नायो हेतुतयापेक्ष्यते तर्हि कथं भाष्यकारः क्रियाशून्यमेव शुक्लो गौरिति वा-क्यार्थ मुदाजहार इतिचेत्तस्य मुदाहरणस्या नादरणीयत्वात् पदार्थसंबन्धप्रदर्शनतात्पर्यपर-त्वेन तदुपपत्तेः निष्प्रयोजनवाक्यप्रयोगादर्श-नात् क्रियावाचकपदं विना वाक्यस्य प्रयोज-नवत्त्वासम्भवादिति तत्राप्यानीयता मित्यध्या-हारः द्वारमितिवद्वाक्यैकदेशे वाक्यप्रयोगः इति भावः । वाक्यार्थबोधं प्रति पदार्थानां कारणत्वा-वधारणाय अन्वयव्यतिरेक माह अपि चेति वार्त्तिके तु यत्तु श्रौतः पदार्थो न वाक्यानुरोधे-नेति भाष्यं व्याख्याय प्रातिपदिका दुच्चर-न्तीति भाष्यं व्याख्यातं ततोन्वयव्यतिरेका-

भ्या मिति भाष्यं व्याख्यातं तेन ज्ञायते कलि-
कातामुद्रितपुस्तके भाष्यक्रमोन्यथयितः वार्त्ति-
ककारस्य व्युत्क्रमेण भाष्यव्याख्याने वीजा-
भावात् मया तु यथापाठं भाष्यं व्याख्यायते
तत्क्रमपरिवर्त्तनावसरे एतत्क्रमोऽपि परिव-
र्त्तितः स्यात् एवं पूर्वत्रापि बोध्यम् पदार्थावगम-
व्यतिरेके वाक्यार्थावगमव्यतिरेकं दर्शयति
कदाचिदिति। अपघातादिति अपचारादित्यर्थः
वस्तुतस्तु अपचारादित्येव भाष्यपाठः न्यायर-
त्नाकरे तथैव दर्शनादिति अपचारो विषयान्त-
रासक्तिः यथाचेदृशस्थले पदश्रवणेपि पदार्था-
वगमाभावादेव वाक्यार्थबोधो न जात इति
पदार्थावगमव्यतिरेके वाक्यार्थावगमव्यतिरेकः
स्फुटः। नन्वत्र पदावगमव्यतिरेकोप्यस्ति यतः
क्षणान्तरेऽवहितो ब्रूते नाह मेतदवादीधरम् मनो
न्यत्र मेऽभूत् तत्पुनर्ब्रूहीति पदावधारणे तु तत
एव पदार्थस्मरणसम्भवा त्पुनर्ब्रूहि त्यसंगतं
स्यादित आह अपिचेति शुक्लं किंचित्पद-

मपरिस्फुटं दूरादुपगच्छन् तत्रैव प्रदेशे हेषया अश्वासाधारणशब्देनाश्वं तरखुरशब्देन गतिं चानुमिमानः तत्र दृशान्यवस्तूना मनुपलम्भाद् गुणजातिक्रियाणां शुक्लाश्वत्वगतीना मेकत्रान्वयसापेक्षाणां योग्यानां मिथोन्वय मुपगच्छति श्वेतोऽश्वो धावतीति तथा चात्र पदाना मश्रवणेऽपि योग्यताकाङ्क्षासन्निधिवशा त्पदार्थानां सामान्यतो ऽन्वयबोधनक्षमत्वं वक्तृतमेवेति केवल मर्थापत्त्या तद्विशेषनियमः कल्प्यते तथाच मानसापराधस्थले पदार्थज्ञानाभावादेव वाक्यार्थावगमाभावो न पदावगमाभावा दसत्यपि पदग्रहणे पदार्थपरिज्ञाने वाक्यार्थबोधस्य कुत्राप्यजननादिति भावः पदार्थज्ञाने सत्येव वाक्यार्थबोधात्तस्यैव हेतुत्वं युक्तमित्यभिप्रायेणाह तस्मादिति वाक्यार्थेन वाक्यशक्ति रस्तीत्याह नास्येति पूर्वोक्ताक्षेपं निराकर्तु मनुवदति यत्तु श्रौतः पदार्थ इति प्रबलया गो-पदश्रुत्याऽविशेषेण सर्वगवीषु प्रसक्ताया गोत्वबुद्धे दुर्बलेन शुक्लादि सम-

भिव्याहारवाक्येन नीलादिव्यक्तिविशेषा दपवृ-
त्ति रयुक्तेत्याशयः शङ्कितुः समाधानमाह
यत्रेति अयंभावः शुक्लोगौरित्यादौ शुक्लगो-
त्वादीनां पदार्थानां परस्परासंबन्धे तत्स्वरूपयोः
स्वातन्त्र्येण प्रत्यक्षेणैव सिद्धतया तदभिधाने
प्रयोजनाभावाद् वाक्यमेवानर्थकं स्यात्तदनर्थ-
कत्वे श्रुतेरपि बाधः स्यादिति तत्सार्थक्यावाधा-
य व्यक्त्यन्तरा दपवृत्ति रेव श्रेयसीति वस्तुतस्तु
नात्र श्रुतिविरोधलेशः श्रुतस्य गोत्वस्य लक्षिता-
या श्च व्यक्ते र्न परित्यागः यस्य परित्यागः
क्रियते स नीलादिः न श्रुत इति तथाचोक्तं
"जातिव्यक्ती गृहीत्वैव वयं तु श्रुतिलक्षिते,
कृष्णादि यदि मुञ्चामः का श्रुति स्तत्र बाध्यते"
इति लक्षणापि नात्र बाध्यते श्रुति बाधस्य तु कः
प्रसङ्ग इति भावः केवलं गौ रानीयता मित्युक्ते
कीदृशो गौ रानेय इति यः संशयः स एव शुक्ल
इत्युक्तया पनीयते न गोत्वं नवा व्यक्तिः संशया-
पनयनं च गोश्रुते रनुगुणमेवेति न श्रुति-

विरोधगन्धः प्रत्युत गोत्वशुक्लयो रसंबन्धे एव श्रुतिविरोधः वाक्यस्यैवा नर्थक्यापत्तेः तयोः प्रमाणान्तरसिद्धत्वा दितिभावः तदेतन्मनसि निधाय सोत्प्रास माह वाक्यार्थोपीति यदपि च सामान्यतः प्रसक्तायाः श्रुते विशेषेऽवस्थापनं तदपि न सर्वत्रेत्याह न सर्वत्र किन्तु क्वचिदेवेत्यर्थः पदार्थहेतुकवाक्यार्थबोधाभ्युपगमादेव नीलादिव्यावृत्ति रर्थात्सिद्ध्यती त्यभिप्रायेणाह एवंच सतीति। यदुक्तं न सर्वत्र तद्दर्शयितुमाह प्रातिपदिकादिति तथाच गामिति द्वितीयान्तश्रुतिदशायामेव कर्मान्वितगोव्यक्तिविशेषावगमा त्सामान्यश्रुति रलब्धपदैव वस्तुतस्तु प्रातिपादिका दुच्चरन्ती द्वितीयादिश्रुतिविभक्तिरितिभाष्यपाठो न्यायरत्नाकरे दृश्यते तथाच गवान्वितकर्मत्वविशेषएव श्रुतिदशाया मवगम्यते न गवाश्वादिसाधारणं कर्मत्वमात्रमिति सामान्यश्रुति रलब्धपदैव यथा द्वितीयां विनापि गवादिपदं प्रयुज्यते एवं प्रा-

तिपादिकं विना केवलद्वितीयादिप्रयोगः स्या त्तदा प्रातिपदिकार्थाविशेषितं कर्मत्वं समान्यरूपेण लभ्येतापि नतु तदस्ति केवलप्रत्ययप्रयोगस्या साधुत्वात् यत्रापि इरियानित्यादौ केवलप्रत्ययः प्रयुज्यते तत्रापि तादृशप्रत्ययस्य प्रकृतिप्रत्ययोभयार्थकत्व मेवेति प्रकृत्यर्थोपरक्तस्यैव प्रत्ययार्थस्य भानं न केवलप्रत्ययार्थस्ये तिभावः विशेषयतीति विशेषकः यत्र प्रातिपदिका दुच्चरन्ती द्वितीयाविभक्ति र्दृश्यते तत्र प्रातिपदिकार्थो द्वितीयार्थस्य कर्मत्वस्य विशेषकः प्रकृत्यर्थानुरक्तस्यैव प्रत्ययार्थस्य भानं न केवलस्येत्यर्थः पदसंघाता इति। ननु संबन्धानित्यत्वाक्षेप एव कर्तु रस्मरणादिना परिहृतो न वेदानित्यत्वाक्षेप स्तत्कथ मुच्यते परिहृतमिति येन हेतुना संबन्धानित्यत्वं परिहृतं तेनैव वेदानित्यत्व मपि परिहर्तुं शक्य मिति परिहारहेतूना मभिहितत्वा त्परिहारोपि कृतप्राय इत्यभिप्रायेण परिहृत मित्युक्तेः।

सू० लोके सन्नियमात् प्रत्योगसन्निकर्षः स्यात् ॥ २६ ॥ (सि०)

भा० लौकिकेषु पुनरर्थेषु प्रत्यक्षेणार्थं मुपलभ्य, सन्नियमः सन्निबन्धनं शक्यं तत्र संहर्त्तुम् एवञ्जातीयकानि वाक्यानि नीलोत्पलवनेष्वद्य । ३८ । २ । इति । तस्मात् अग्नि होत्रं जुहुयात् स्वर्गकामः इत्येतेभ्य एव पदेभ्यो ये अर्था अवगताः, तेभ्यः एवैतदवगम्यते अग्निहोत्रात् स्वर्गो भवतीति पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यो वाक्यार्थ इति

सप्रतिसाधनत्वं च संघातत्वस्य हेतोः सर्ववेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वादधुना वेदाध्ययनवदिति नच भारतादिष्वपि एव मनुमानसंभवा त्तेषामपि नित्यत्वं स्यादिति वाच्यम् तत्र कर्तृस्मरणेनैव मनुमानासंभवात् नच प्रजापति र्वेदानसृजत इत्युक्त्या वेदेऽपि तदस्तीति वाच्यम् अर्थवादमूलकत्वादृशस्मृतेरनुभवमूलकत्वाभावेना प्रमाणत्वात् यदि कश्चिद्वेदस्य कर्तास्या त्तर्हि तत्प्रणयनकाले केनचिदुपलब्धो भवेत् तथाच स उपलब्धकर्तृकः

परस्मै कथये दयमस्य करोति सोऽप्यन्यस्मै सोऽप्यन्यस्मै इति परंपरया भारतादौ व्यासादेरिवाधीयानकर्तृकं स्मरणं नियमेन स्यात् ननु तदस्तीति तादृशस्मरण मर्थवादमूलकमेव नानुभवमूलक मिति न प्रमाणम् नचार्थवाद एव प्रमाण मस्तु किमत्र प्रमाणान्तरान्वेषणेन स्तुतिपराणा मर्थवादानां स्ववाच्यार्थे प्रामाण्याभावस्या र्थवादाधिकरणे वच्यमाणत्वात् नच तादृशस्मरणप्रामाण्याय मूलान्तरमेव तर्हि कल्प्यतां नहि कल्पनायामस्ति कश्चित्प्रतिरोध इति न अस्ति तावत्प्रकृते प्रतिरोधः कः अर्थवाद एव कथम् इत्थं पारंपर्याभावा त्स्मरणस्या नुभवमूलकत्वे निरस्ते तदन्यथानुपपत्त्या किंचिन्मूलं कल्पनीय मित्यपेक्षाया मयमेव तत्र मूलं भवतु कल्पनाबीज मन्यथानुपपत्तिं प्रतिहन्ती त्यवद्यात नचेदं स्तुतिपरमिति कथमत्र मूलं स्यात् अन्यपरवाक्यादपि भ्रान्तिसम्भवात् दृश्यते हीदानीन्तनपुरुषाणां तत्कार्यत्वस्मरणभ्रान्तौ मूलत्वेनेद

मेवेति ध्येयम् इति कल्पकलिकायां वेदनित्यताधिकरणम् ।

## सू० वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ ( पू० १ )

भा० उक्तं (४।८।) चोदनालक्षणोऽर्थो धर्म्म इति, यतो न पुरुषकृतः शब्दस्यार्थेन सम्बन्धः । तत्र पदवाक्याश्रय आक्षेपः परिहृतः । इदानी मन्यथा ऽऽक्षेप्स्यामः 'पौरुषेया श्चोदना' इति वदामः, सन्निकृष्टकालाः कृतकाः वेदा इदानीन्तनाः तेच चोदनानां समूहाः, तत्र पौरुषेयाश्चेत् वेदाः, असंशयं पौरुषेयाः चोदनाः । कथम् ? पुनः कृतका वेदा इति केचिन्मन्यन्ते । यतः पुरुषाख्याः, पुरुषेण हि समाख्यायन्ते वेदाः । ' काठकं, कापालकं, पैप्पलादकं, मौहुलमिति । नहि सम्बन्धादृते समाख्यानं, नच पुरुषस्य शब्देन अस्ति सम्बन्धः, अन्यतः कर्त्ता पुरुषः, कार्य्यः शब्दः इति । ननु प्रवचनलक्षणा समाख्या स्यात् । नेति ब्रूमः । असाधारणं हि विशेषणं भवति एक एव हि कर्त्ता बहवोऽपि प्रब्रूयुः । अतोऽस्मर्य्यमाणोऽपि चोदनायाः कर्त्ता स्यात् । तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्म्म इति ।

## सू० अनित्य दर्शनाच्च ॥२८॥ ( पू० २ )

भा० जननमरणवन्तश्च वेदार्थाः श्रूयन्ते 'ववरः प्रावाहणि रकामयत कुसुरुविन्दः 'औद्दालकि रकामयत' इत्येव मादयः ।

उद्दालकस्यापत्यं गम्यते औद्दालकिः, यद्येवं, प्राक औद्दालकि-जन्मनः, नायं ग्रन्थो भूतपूर्वः । एवमप्यनित्यता ।

## सू० उक्तन्तु शब्दपूर्वत्वम् ॥२९॥ (सि०)

भा० उक्त मस्माभिः शब्दपूर्वत्वमध्येतॄणाम् । केवलं आद्येऽ-परिहारो वक्तव्यः, सोऽभिधीयते ।

## सू० आख्याप्रवचनात् ॥३०॥ (उ०) १

भा० यदुक्तं (१ पू०) कर्तृलक्षणा समाख्या काठकादयेति । तदु-च्यते । नेयमर्थापत्तिः, कर्तृभिरपि ह्येनामाचक्षीरन्, प्रकर्षेणवचनं अनन्य साधारणं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो भवन्ति । स्मर्यते च 'वैशम्पायनः सर्वशाखाध्यायी, कठः पुनरिमां केवलां शाखा मध्यापयांबभूवेति' । स बहुशाखाध्यायिनां सन्निधा वेकशाखा ध्यायी अन्यां शाखा मनधीयानः, तस्यां प्रकृष्टत्वा दसाधारण मुप-पद्यते विशेषणम् ।

## सू० परन्तु श्रुतिसामान्यमात्रम् ॥३१॥ (उ० २)

भा० यच्च ( २ पू० ) प्रावाहणि रिति । तन्न, प्रवाहणस्य पुरुषस्या सिद्धत्वात् न प्रबाहणस्यापत्यं प्रावाहणिः । प्रशब्दः प्रकर्षे सिद्धः, वहतिश्च प्रापणे, नत्वस्य समुदायः क्वचित् सिद्धः इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियायामपि कर्तरि । तस्माद् यः प्रवाहयति

स प्रवाहणिः । बबरः इति शब्दानुकृतिः । तेन यो नित्योऽर्थः तमेवैतौ शब्दौ वदिष्यतः । अतः उक्तम् परन्तु श्रुतिसामान्यमात्रम् इति ।

वेदांश्चैके सन्निकर्षं पुरुषाख्याः इति सूत्रम् पदपदार्थसंबन्धानित्यत्वप्रयुक्त आक्षेप स्तेषां नित्यत्वसाधनेन परिहृत इदानीं समाख्या-वशेन वेदस्य पौरुषेयत्वावबोधा त्तद्घटकचोद-नानां पुनरप्रामाण्यमाक्षिप्यते पौरुषेया इति ननु समाख्यया पौरूषेयत्वाक्षेपो न युक्तः साहि सामान्यतः प्राप्त विशेषतो नियमयति यथा दक्षिणया परिक्रीताना मृत्विजां वैदिके कर्मणि यथेष्टं कर्तृत्वप्राप्तौ आध्वर्यव मित्यादिसमा-ख्यया अध्वर्यो रेव तत्र कर्तृत्वं नियम्यते आध्वर्यवं कर्म स एवानुतिष्ठति नान्य एवं वेदस्य सामान्यतो न केनापि प्रमाणादि ना कर्तृ-त्वं प्राप्तं यन्नियमाय समाख्या व्याप्रियेत किंच कठादिसमाख्या कठादिप्रोक्तत्वेना प्युपपद्यते इति न नियमेन तत्कर्तृकत्वं साधयितुं क्षमते तेन कृत मिति वत्तेन प्रोक्त मित्यर्थेपि तदुपपत्ते रिति चेन्न वैदिकं वाक्यं पौरुषेयं वाक्यत्वा

त्कालिदासादिवाक्यव दित्यनुमानेन सामान्यतः
कर्तृजन्यत्वप्राप्तौ काठका समाख्यया तज्जन्य-
त्वं विशेषतो नियमयितुं शक्य मित्यभिप्रायात्
नच वचनान्तरसाधर्म्यप्रयुक्ततदाक्षेपः पूर्वमेव
परिहृतः तत्कुतः पुनरिदानीं स एवाक्षेपः क्रियते
इतिचे दयमभिप्रायः वेदपौरुषेयत्वनिराकरणा-
र्थ मिदं प्रकरणं तेन पौरुषेयत्वनिमित्तक स्तदा-
क्षेपोऽत्रै वोपन्यसनीयो निरसनीयश्च पूर्वत्र दृशा-
क्षेपतन्निरासौ चानागतावेक्षणेनोपन्यस्तौ
एतत्प्रकरणाभावात् किंच भो भो भगवन्तः
सभ्याः क्वेदं दृष्टं क्ववा श्रुतं लोके यद्वाक्येषु
पदानां रचना नैसर्गिकी भवति 'यदि स्वाभाविकी
वेदे पदानां रचना भवेत् पटे हि हन्त तन्तूनां कथं
नैसर्गिकी न सा' शन्नो देवी रभीष्टये नारायणं
नमस्कृत्य अस्त्युत्तरस्यां दिशि देवतात्मेत्यादि-
तुल्ये रचनात्वे क्वचि त्कर्तृपूर्वकत्व मपरत्र तद्वि-
पय इति महान् व्यामोह इति परोक्तरीत्या वेद-
वाक्यरचनान्यथानुपपत्या वेदेऽपि कर्ता प्रसज्यते

किंच वर्वरः प्रावाहणि रित्यनित्यार्थवाचकशब्द-स्य वेदे दर्शनाद्वेदः कृतक इति मति भवति प्रवाहणस्या पत्यं प्रावाहणि रिति व्युत्पत्या प्रवाह-णिशब्दार्थनिर्णयो भवति तेन ज्ञायते प्रवाहण-पुत्रोप्रत्यनन्तर मयं वेदः कृतः ततः पूर्वन्त्वयं कीदृशः स्यादिति वेदस्य कश्चित्कर्ता अवश्यमेवा श्रयणीय इति पूर्वपक्षसंक्षेपः तदेतद्भाष्ये दर्श-यति अन्यथा क्षेप्स्याम इत्यादिना। सन्निकृष्ट कालाः इति सन्निकर्ष मिति सूत्रावयवव्याख्यानं यतः कठादिपुरुषेण ख्यायन्ते वेदा अत स्तत्स-न्निकृष्टकालाः अन्यथा इतानीन्तनाना मिव कठादीना मपि तत्र निर्देशो न स्यात् तत्सन्नि-कृष्टकालत्वा त्तत्कृतत्वं वेदे संभवति भाष्यस्येयं योजना इदानीन्तना वेदास्त त्सन्निकृष्टकाला अत स्तत्कृता इत्यर्थः ननु वेदस्य कृतकत्वेऽपि किमायातं चोदनानामित्यत आह तेचेति पुरुषा-ख्या इति हेतुव्याचिख्यासया पृच्छति कथमिति द्वितीयोपपत्तये योग्यक्रियां दर्शयति मन्यन्ते

इति कार्यकारणभावः संबन्धः समाख्यानिमित्त इत्याह नहीति प्रवचनस्य समाख्यानिमित्तत्वं निरस्यति नेति प्रवचनकर्तृत्वयो र्भेदं दर्शयति असाधारणमिति असाधारणनिमित्तक एव व्यपदेशो लोके दृष्टः अस्मरणेऽपि समाख्याबलात्कर्ता सिद्धयतीत्याह अत इति आक्षेप मुपसंहरति तस्मादिति अनित्यदर्शनाच्चेति सूत्रम् अनित्यार्थाभिधाना दपि वेदोऽनित्य एव नहि एवं जातीयकार्थनित्येनाभिधातुं शक्यः तदानी मर्थाभावेन विवक्षासंभवात् अप्रमाणत्वापत्तेश्च पूर्वं तदर्थाभावादिति। उक्तं तु शब्दपूर्वत्व मिति सूत्रम्। वेदाध्ययनं गुर्वध्ययनपूर्वक मित्यभ्युपगमादाह उक्तमिति सूत्र मवतारयितु माह स इति। आख्याप्रवचना दिति सूत्रम्। नेयमर्थापत्ति रिति काठकसमाख्यान्यथानुपपत्ति र्वेदस्य जन्यत्वे यत् प्रमाण मुक्तं तदसत् साहि प्रवचननिमित्तेना न्यथाप्युपपद्यते इतिभावः प्रवचनस्याप्य साधारणत्वं दर्शयति अनन्येति वस्तुतस्तु समा-

ख्यया न तत्कर्तृकं साधयितुं शक्यते सामा-
न्यत स्तदप्राप्तेः कर्त्तुःस्मरणे न किञ्चिन्मूल
मित्युक्तमेव प्रयोजनाभावादपि नास्य कर्ता
नहि कर्तृकल्पनातो वेदस्य किंचित्प्रयोजनं निर्व-
र्हति नच समाख्यैव तत्र मूल मिति शङ्क्यम्
प्रवचनेनापि तदुपपत्तेः एका दुर्बलाङ्गभूता समा-
ख्या भूयासं प्रधानं-शब्दराशिं नैव बाधितु
मुत्सहते तदुक्तं "श्रुत्यादे र्दुर्बला चासौ न शक्ता
तानि बाधितुम् अङ्गभूयांस मेकेयं शब्दराशिं
न बाधते" इति अथवा अवयवार्थशून्या रथन्त-
रादि वद् रूढि रेवेयमस्तु नच रूढिस्वीकारे
श्रुतिसामान्यमिति सूत्रविरोधः, अनित्यार्थ-
कत्वाभावेन समाख्याया मपि तदुपपत्तेः विरूप-
सामव त्सत्तामात्र एव कठो विशेषणं भवतीति
स्पष्ट मन्यत्र तथाचोक्तं 'सति साधारणत्वे वा
सम्भवेन विशेषणम् यथा वैरूप्य सामेति सत्त-
यैव प्रतीयते" इति अग्नीषोमयो र्विशिष्टयो रेव
देवतात्व मिव यदि प्रवचनत्व मनेकपुरुषसापेक्षं

धमः स्यात्तर्हि यथा अग्नीषोमीयहविषः केवले नाग्नेयशब्देन व्यपदेशो न भवति न भवेदेवं शाखाया अपि काठकशब्देन व्यपदेशः तत्तु न तथा किन्तु मातृत्ववत्प्रत्येकापेक्षमिति प्रत्येकशब्देन व्यपदेष्टुं शक्यते डित्थडवित्थयो र्माता डित्थमातेति वत्कठतदितरपुरुषप्रोच्यमानापि शाखा कठशाखेति व्यपदिश्यते नच तत्प्रवचनस्य पुरुषान्तरसाधारणत्वे कठेनेव पुरुषान्तरेण किन्न साख्यायते व्यवहारफलकाख्यानस्यैकशब्देनैवोपपत्तौ पुरुषान्तरेण तदाख्याने प्रयोजनाभावात्। नच तेनैवाभिधाने नियमाभावात् कदाचित्पुरुषान्तरेणाप्यभिधानप्रसक्तिः सति कार्ये निमित्तानुसरण मिति न्यायेन निमित्तस्य सतः निरूपण एवास्माक मधिकारात् समाख्यायाः अस्मदाद्यधीनत्वाभावे नेदृशपर्यनुयोगानर्हत्वात् दृश्यते च साधारणस्या प्यसाधारणशब्देन निर्देशः अगस्त्यतीर्थं कुमारिल तिर्थ मित्यादि। परन्तु श्रुतिसामान्यमात्र मिति सूत्रम् अनित्यार्थकत्वं

परिहरति यच्चेत्यादिना भाष्य मिदं निगदव्याख्यातम्। कृते वा विनियोगः स्या त्कर्मणः संबन्धादिति सूत्रम्।

## सू० कृतेवा विनियोगः स्यात् कर्मणः सम्बन्धात् ॥३२॥

भा० अथ कथमवगम्यते—नायमुन्मत्तबालवाक्यसदृश इति ? तथाहि पश्यामः वनस्पतयः सत्रमासत, सर्पाः सत्र मासत इति, यथा, जरद्गवो गायति मत्तकानि, कथंनाम जरद्गवो गायेत् ? कथं वा वनस्पतयः सर्पा वा सत्र मासीरन्निति। उच्यते—विनियुक्तं हि दृश्यते, परस्परेण सम्बन्धार्थम्। कथं ? ज्योतिष्टोमः इत्यभिधाय कर्तव्यः इत्युच्यते। केन ? इत्याकांक्षिते सोमेन इति किमर्थं ? इति स्वर्गाय इति। कथमिति इत्थं, अनया इति कर्तव्यतया इति। एवमवगच्छन्तः, पदार्थं रेभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृश मिति वक्ष्यामः ?

ननु अनुपपन्न मिदं दृश्यते,—वनस्पतयः सत्र मासत इत्येवमादि। नानुपपन्नम्। न अनेन अग्निहोत्रं जुहुयात् स्वर्गकामः—इत्येवमादयोऽनुपपन्नाः स्युः। अपिच वनस्पतयः सत्रमासत इत्येवमादयोऽपि नानुपपन्नाः, स्तुतये ह्येताः सत्रस्य, वनस्पतयो नामा चेतनाः इदं सत्र मुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः। तद्यथा लोके, सन्ध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति।

अपिच अविगीतः सुहृदुपदेशः सुप्रतिष्ठितः कथमिवाशङ्क्येत—उन्मत्त-बालवाक्यसदृशः इति। तस्माच्चोदनालक्षणोऽर्थो धर्म इति सिद्धम्।

इति श्रीमच्छबरस्वामिनः कृतौ मीमांसाभाष्ये प्रथमस्य अध्यायस्य प्रथमः पादः। तर्कपादोऽयम्।

अयुक्तार्थकत्वे नोत्तरवाक्य वदप्रमाणत्व माशङ्कते वनस्पतय इति परस्परान्वितार्थकत्वा-प्रामाण्यमेवेत्याह उच्यते इति तावतापि वन-स्पतय इत्यादीनां प्रामाण्यं समर्थित मित्याह अनुपपन्ना इति स्तुतिपरत्वेन स्वार्थे तात्पर्याभावा त्तत्राप्रमाणत्वेऽपि स्वतात्पर्यार्थे प्रामाण्य मव्या-हतमेवेत्याह स्तुतय इति अतिस्पष्ट मत्रत्यं भाष्यं न व्याख्यान मपेक्षते इति न पराक्रम्याभिहित मस्माभि रिति शिवम्॥

इति श्रीलक्ष्मीगर्भजेन पं० श्रीबलभद्रदत्तात्मजेन म० म० पं० श्रीहरिहरकृपालुद्विवेदिना विरचिता कल्पकलिका तर्कपादान्ता समाप्ता।

श्रीवैक्रमे नागनगाङ्कचन्द्रमिते कुजेऽब्दे शुचि पूर्णिमायाम्।
इमामहं पाटलिपुत्रमध्यविद्यालयस्थोऽरचयं मनोज्ञाम्॥
अस्मत्पितृपितामहेन सुधिया धाराधरेणस्वयम्।
लब्धायां भुवि निर्विवाद मभितो वासाय यो वासितः॥
शुद्धः सार्थक एव पण्डितपुरं ग्रामः प्रयागात्स नः।
सार्द्धक्रोशचतुष्टयीपरिमितोऽवाच्यां दिशि भ्राजते॥

# शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| सद्राध्य | सद्राध्यं | १ | ११ |
| तर्कै | तर्कैः | १ | १३ |
| त्रयो | त्रयी | २ | ४ |
| लोपाय चेष्टैः | लोपापचेष्टैः | २ | ७ |
| प्राच्यापद्या | प्राच्यपद्या | २ | ८ |
| सवैसैः | सर्वज्ञैः | २ | [illegible] |
| परिसूववलन् | परिस्खलन् | २ | १४ |
| मिध | भिध | २ | १७ |
| कवि | क वि | ३ | २ |
| मेयैर्थैप | मेयेर्थेऽपि | ३ | ६ |
| नीतार्थीनाम् | नीतार्थिनाम् | ३ | १६ |
| प्रज्ञावान् | प्रेक्षावान् | ४ | ३ |
| सबन्ध | संबन्ध | ४ | ५ |
| चैकार | चकार | ४ | ८ |
| प्रवृवत्य | प्रवृत्य | ५ | [illegible] |
| वा:यार्थ | वाक्यार्थ | ५ | ६ |
| प्रतिप्रदान | प्रतिपादन | ५ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| तरपेक्षया | तरापेक्षया | ५ | १५ |
| वश्कत्वात् | वश्यकत्वात् | ५ | १८ |
| शद्वाथ | शब्दार्थ | ७ | १ |
| मीमाशास्त्र | मीमांसाशास्त्र | ७ | २ |
| रसायनाद्यानतर्य | रसायनाद्यानन्तर्य | ७ | १४ |
| निःप्रयोजत्वात् | निष्प्रयोजनत्वात् | ८ | ६ |
| भिधने | भिधाने | ८ | ७ |
| भिधभिधाने | भिधाने | ८ | ८ |
| व्यथ | व्यर्थ | ८ | १० |
| निप्रमाण | निष्प्रमाण | ८ | १३ |
| मवान्तर | मावान्तर | ९ | ५ |
| मङ्ग | माङ्ग | ९ | १६ |
| नाध्या | नाध्या | १० | ९ |
| ख्यायते | ख्यायन्ते | १० | ११ |
| वाख्येयाति | व्याख्येयानि | १० | १२ |
| नेकर्थ | नेकार्थ | ११ | ८ |
| स्वमपि | स्यापि स्वी | ११ | १३ |
| व्याख्यानं | व्याख्यान | ११ | १५ |
| सानी | सन्ति | ११ | १७ |
| प्रवत्ति | प्रवृत्ति | ११ | १८ |
| दिव | दिवत् | १२ | २ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| यदि | पदिश्येत | १२ | ५ |
| प्रीत्या | प्रतीत्या | १२ | ७ |
| न्याय्यतद्वा | न्याय्यतया | १२ | ८ |
| प्रतीयाला | प्रतीता | १२ | ९ |
| वृत्तिः | वृत्ति | १२ | १० |
| बोध्य | बोध्या | १२ | ११ |
| प्रकृतिप्रत्यत्यो | प्रकृतिप्रत्ययो | १२ | ११ |
| वक्तु | वक्तु | १२ | १३ |
| व्यायन्ने | व्याख्यायन्ते | १२ | १६ |
| सत्रा | सूत्रा | १२ | १८ |
| सत्रे | सूत्रै | १२ | १८ |
| मूत | भूत | १३ | १ |
| स्वातन्त्रेण | स्वातन्त्र्येण | १३ | २ |
| सुत्राणि | सूत्राणि | १३ | ३ |
| सुत्रेषु | सूत्रेषु | १३ | ४ |
| व्याख्येषु | व्याख्येयेषु | १३ | ४ |
| साति | सति | १४ | ९ |
| येप | य | १५ | ५ |
| र्थकत्व | र्थकत्वं | १५ | ८ |
| कत्व | कत्वं | १५ | ९ |
| द्वय | द्वयं | १५ | १२ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| थः | र्थः | १६ | १ |
| क्यत्य | क्यस्य | १६ | २ |
| पास्योपेद्य | पयि | १६ | ५ |
| हुंफत्त | हुंफड़ा | १६ | १० |
| उताथ | उतार्थ | १६ | ११ |
| स्फुरा | स्फुटा | १६ | १२ |
| वदे | वेद | १६ | १५ |
| कर्तु | कर्तुं | १६ | १८ |
| किमथ | किमर्थ | १८ | ६ |
| ज्योनि | ज्योति | २० | ३ |
| दुःष्येयु | दुष्येयु | २२ | ३ |
| हविव | हवि | २३ | ३ |
| ग्रह | ग्रहे | २५ | ८ |
| पदर्यमे | पदद्वयमे | २७ | ४ |
| ख्याने | ख्यानं | २८ | ५ |
| धम | धर्म | ३० | १७ |
| अहन्य | अन्य | ३१ | १८ |
| द्वदा | द्वेदा | ३२ | ४ |
| किचि | किञ्चि | ३२ | ५ |
| वैदा | वेदा | ३२ | ११ |
| त्त्याव | त्त्येव | ३२ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| शद्व | शब्दः | ३५ | ३ |
| अथे | अर्थे | ३८ | ८ |
| न्तय | न्तर्यं | ४० | ५ |
| कवत्वं | कत्वं | ४२ | १ |
| सान | स्नानं | ४२ | १७ |
| विधिवि | विधिर्वि | ४४ | २ |
| व्या | प्या | ४४ | ६ |
| चिह | चिद् | ४५ | १ |
| क्रीयते | क्रियते | ४५ | १४ |
| धर्म | धर्मं | ४६ | ७ |
| यादी | यदी | ४७ | ७ |
| न्तय | न्तर्यं | ४८ | ४ |
| ल्य | ल्यप् | ४८ | ८ |
| वाध्यते | न बाध्यते | ४८ | १६ |
| धर्मं | धर्मं | ४८ | १८ |
| गच्छ | गच्छे | ४६ | २ |
| स्नयाद् | स्नायाद् | ४६ | १३ |
| नेयम | नेयम् | ५ | ७ |
| धर्म | धर्म | ५१ | १२ |
| ष्ठाय | ष्ठाप | ५२ | ८ |
| धम | धर्मं | ५३ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| कचि | काचि | ५४ | १६ |
| निणय | निर्णय | ६० | १ |
| निष | निष् | ६० | ८ |
| माकत्व | माणकत्व | ६० | १७ |
| प्रवृत्त | प्रवृत्ते | ६१ | ७ |
| वात | वात् | ६१ | १८ |
| धम | धर्म | ६२ | ७ |
| धमः | धर्मः | ६२ | १७ |
| त्येन | त्यनेन | ६३ | १३ |
| त्वच्चे | त्वाच्चे | ६४ | १८ |
| सगतः | सर्गतः | ६५ | ११ |
| तदुत्याद | तदुत्पाद | ७१ | १० |
| इन्द्रस्य | इन्द्रियस्य | ७५ | ३ |
| दोष | दोषा | ७६ | १६ |
| कास्मि | कस्मि | ७६ | १७ |
| द्यात | द्यत | ७७ | १६ |
| शक्ति | शुक्ति | ७९ | २ |
| तदानास्तवा | तदनाप्त | ८० | १७ |
| धमि | धर्मि | ८१ | १० |
| मित्येवा | मित्येव | ८५ | १८ |
| कत्था | कत्वा | ८६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| एव आ | एव मा | ८६ | १२ |
| कुव्हा | कुड्या | ९० | ८ |
| सत्याभानि | सत्यामग्नि | ९१ | १७ |
| तजेत | यजेत | ९२ | २ |
| इत्ययो | इत्यादि | ९२ | २ |
| विज्ञाने | विज्ञानेन | ९४ | ४ |
| विप | विप | ९४ | १७ |
| चेत् | तच्चेत् | ९४ | १८ |
| पश्यतं | पश्यत | ९५ | १८ |
| शक्तिशुकत्वं | शुक्ति शकलं | ९५ | १८ |
| विरोधो | विरोधे | ९६ | १२ |
| कारण | कारणम् | ९६ | १४ |
| स्यपि | स्यापि | ९७ | १४ |
| नाम | मान | ९७ | १६ |
| शक्य | शक्यं | ९८ | २ |
| मतत् | तत् | १०३ | ६ |
| प्रमाएय | प्रामाएय | १०४ | ९ |
| स्तनि | स्तन्नि | १०५ | २ |
| सव | सर्व. | १०५ | ६ |
| रंन | रेन | १०६ | ४ |
| मपिवि | मप्यत्रि | १०८ | |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| तदर्दी | तद्दर्शी | ११० | ५ |
| माणा | माण्या | ११० | ११ |
| वङ्कः | शङ्क | ११२ | १३ |
| प्रमा | प्रामा | ११२ | १८ |
| प्रमा | प्रामा | ११३ | १० |
| पौरूषेयं | पौरूषेय | ११३ | १७ |
| प्रमू | न्यम् | ११४ | ४ |
| भूतांज्ञा | भूतार्थज्ञा | ११५ | ६ |
| निर्णय | निर्णाय | ११७ | ६ |
| मभ्युपेक्ष्य | मनभ्युपेय | १२० | १४ |
| न्य | न्यत्वा | १२१ | १४ |
| दिनि | दिति | १२३ | १५ |
| जापय | जाय | १२४ | १५ |
| नुमानु | नुमाना | १२४ | १७ |
| धी | धीन | १२५ | १८ |
| पदाथ | पदार्थ | १२६ | १६ |
| दिः पश्ये | दि पश्ये | १२७ | ६ |
| दशना | दर्शना | १२७ | १७ |
| दश | दर्श | १३० | २ |
| पत्तः | पत्तोः | १३२ | ६ |
| यत्तौ | पत्तौ | १३३ | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठशंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| तार्थ | तानर्थ | १३५ | १८ |
| श्वेना | श्येना | १३७ | ११ |
| श्वेना | श्येना | १३८ | २ |
| च्ति | च्चेति | १३८ | ५ |
| कर्तृता | कर्तव्यता | १३९ | ११ |
| दम्रा | दम्रो | १३९ | १७ |
| दुःखानु | दुःखमनु | १४० | ९ |
| श्चेलि | श्चे | १४० | ११ |
| दृष्टान्तरस्य | दृष्टान्तस्य | १४१ | ९ |
| मण्या | माण्या | १४२ | १४ |
| जन | जनन | १४२ | १५ |
| शद्रा | शूद्रा | १४३ | ३ |
| निरय | र्निरय | १४३ | ४ |
| दग्निसोमय | दग्नीषोमीय | १४३ | १० |
| तदपि | यदपि | १४३ | १६ |
| त्वव | व | १४७ | ७ |
| सूत्रं च्चन | सूचन | १४७ | १५ |
| नाधेगत | नाधिगत | १४८ | ६ |
| सत्रे | सूत्रे | १४९ | ९ |
| याथ | योर्थ | १५२ | १३ |
| दिङ्ङ | दिङ | १५४ | ३ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| वतना | वर्तना | १५८ | १४ |
| भ्युय | भ्युप | १६१ | १२ |
| द्वोष | द्दोष | १६२ | १७ |
| संगं | स गं | १६७ | ४ |
| विक्कृष्ट | विप्रकृष्ट | १६८ | १२ |
| वत्तके | वर्तके | १६९ | १ |
| द्र प्राप्य | दुप्राप्य | १६९ | ७ |
| स्वन्यत्र | स्त्वन्यत्र | १७१ | १० |
| तहि | तर्हि | १७३ | ११ |
| रपेक्ष | रापेक्षा | १७३ | १४ |
| गमपि | गमेऽपि | १७५ | १० |
| द्वद्धे | द्वद्धे | १७६ | ८ |
| वशेषिक | वैशेषिक | १७६ | १४ |
| ब्रोदन | ब्रौदन | १७८ | ३ |
| कष | कर्ष | १७८ | ११ |
| दृषभय | दुमय | १७९ | १० |
| वयधि | वैयधि | १८१ | १ |
| लाष्ठ | काष्ठ | १८१ | ११ |
| त्वक | त्मक | १८२ | ३ |
| वौद्ध | वौद्धा | १८२ | १३ |
| धर्म | धम | १८७ | १२ |

| अशुद्धम् | शुद्धम् | पृष्टसंख्या | ंक्तिसंख्या |
|---|---|---|---|
| निवि | निर्वि | १८७ | १७ |
| चितं | चित | १८८ | १५ |
| नाम | ज्ञान | १८६ | ६ |
| रति | इति | १८६ | १३ |
| गा | गो | १८६ | १८ |
| साहश | साहश्य | १६० | २ |
| मराया | मण्या | १६१ | १३ |
| त्त्रावि | त्त्राति | १६१ | १६ |
| क्रियाकत्वा | क्रियानाश्रयत्वा | १६२ | १ |
| कुक्षादौ | स्थूणादौ | १६२ | ६ |
| कुरूपस्य | स्थूणादेः | १६२ | १० |
| क्षपार | कूपार | १६२ | १३ |
| हिमगिरि | हिमगिरिं | १६२ | १४ |
| निरिक्षमाण | निरीक्षमाण | १६२ | १५ |
| कमना | कर्मता | १६२ | १६ |
| मातण्ड | मार्तण्ड | १६३ | १ |
| तथीक्तः | तथोक्तः | १६३ | ६ |
| हातं | हीतं | १६३ | १३ |
| धम | धर्म | १६४ | ११ |
| प्रमाण | प्रमाणं | १६८ | १२ |
| वयथ्या | वैयथ्या | २०१ | १४ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| यात् | स्यात् | २०६ | ४ |
| णव | णैव | २०७ | १ |
| पयिक्यायाः | पयिष्याः | २१६ | १ |
| सदुप | तदुप | २१८ | १५ |
| चोदान | चोदना | २१६ | १६ |
| आस्त | अस्ति | २२६ | ४ |
| मात | मिति | २२८ | १ |
| पूव | पूर्व | २३४ | १३ |
| सन्निकर्षेऽ | सन्निकर्षोऽ | २३७ | १० |
| निणय | निर्णय | २४० | ४ |
| रवा | इवा | २४१ | ४ |
| बोच्छा | बौद्धा | २४२ | ५ |
| वाह्याथ | वाह्यार्थ | २४३ | ११ |
| ह्यभाव | स्वभाव | २४६ | १४ |
| वाह्याथ | वाह्यार्थ | २४७ | १ |
| माथिक | मार्थिक | २५० | ७ |
| धूमि | धर्मि | २५१ | १४ |
| ना | नो | २५८ | ४ |
| पता | पेता | २५८ | ४ |
| सर्व | सव | २५६ | ५ |
| वाक्याथ | वाक्यार्थ | २५६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| निवि | निर्वि | २६० | १६ |
| सव | सर्व | २६० | १२ |
| स्वोकारे | स्वीकारं | २६१ | १८ |
| मेवेत | मेवति | २६४ | ६ |
| शक्ता | शुक्ता | २६५ | १० |
| अत्रादि | अनादि | २७२ | ६ |
| श्चायं | श्चार्था | २७२ | ११ |
| दावाव | दावव | २८६ | ४ |
| त्यथः | त्यर्थः | २९३ | ४ |
| त्यपण | तर्पण | २९३ | १७ |
| वत | वर्त | २९३ | १८ |
| पूवं | पूर्व | २९५ | ४ |
| त्याच्च | त्वाच्च | २९९ | ६ |
| दथ | दर्थ | ३०१ | १२ |
| पूव | पूर्व | ३०१ | १२ |
| मथ | मर्थ | ३०२ | ३ |
| दथ | दर्थ | ३०४ | २ |
| ज्ञान नानयो | ज्ञानज्ञेययो | ३०४ | ८ |
| अथ | अर्थ | ३०५ | १ |
| अथ | अर्थ | ३०७ | १ |
| प्रदश | प्रदर्श | ३०७ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठ संख्या | पंक्ति संख्या |
|---|---|---|---|
| महती | महंती | ३०७ | ११ |
| नाथ | नार्थ | ३०८ | ४ |
| मेवा | मेवाव | ३०९ | ६ |
| माथिक | मार्थिक | ३०९ | १० |
| न | र्न | ३११ | ६ |
| नाचितः | नोचितः | ३११ | १२ |
| सवत्र | सर्वत्र | ३१२ | ६ |
| समथ | [समर्थ | ३१४ | १ |
| पूत्र | पूर्व | ३१४ | ३ |
| निदि्ष्ट | निर्दिष्ट | ३१६ | २ |
| व्याप्ति न | व्याप्ति र्न | ३१६ | १८ |
| धम | धर्म | ३२० | १५ |
| स्यम्रि | स्याम्रि | ३२१ | १३ |
| ष्णात्वा | ष्णात्व | ३२७ | १० |
| श्रोत्राम्रा | श्रोत्राम्रा | ३२९ | १० |
| त्तहि | र्त्तहिं | ३३६ | १३ |
| माज्या | मात्रा | ३४४ | १४ |
| व्यत्स्य | व्यत्त्य | ३४८ | १० |
| प्रत्याय च | प्रत्यायय | ३४९ | १३ |
| त्वात् न | त्वान्न | ३५१ | २ |
| कत्वन | कत्वेन | ३५२ | १ |
| समय | समर्थ | ३५६ | १ |

| अशुद्धम् | शुद्धम् | पृष्ठ संख्या | पंक्ति संख्या |
|---|---|---|---|
| श्रया | श्रय | ३५९ | ८ |
| जावन | जीवन | ३६६ | १२ |
| मवं | मेवं | ३६८ | १९ |
| स्वभावः | स्वाभावः | ३६९ | ९ |
| रेकोनु | रेकानु | ३७७ | ७ |
| रूपारूपादि | रूपादि | ३६७ | ७ |
| मात्रव | भावः | ३७७ | १२ |
| माधुय | माधुर्य | ३७९ | ७ |
| स्मय्त | स्मर्य्य | ३८१ | १ |
| लिंग | लिंगं | ३८१ | १० |
| दशाना | दर्शना | ३८१ | १८ |
| मेद | मेदहं | ३८४ | १८ |
| कम | कर्म | ३९३ | १ |
| त्तहि | त्तर्हि | ३९७ | १ |
| कारका | कारको | ४०५ | १६ |
| प्रयाग | प्रयोग | ४०८ | ८ |
| शद्वाथ | शब्दार्थ | ४०९ | ३ |
| विफळः | विकलः | ४११ | १३ |
| त्यच | त्यत्र | ४१४ | ६ |
| श्रात्र | श्रोत्र | ४१४ | १४ |
| द्रतादि | द्रुतादि | ४१८ | ७ |
| वर्ण रिति | वर्ण इति | ४२१ | ४ |

| अशुद्धम् | शुद्धम् | पृष्टसंख्या | पंक्तिसंख्या |
|---|---|---|---|
| द्रग | द्रर्ग | ४२१ | १४ |
| मथ | मर्थ | ४२१ | १८ |
| दाषः | दोषः | ४२७ | १८ |
| जन्यनिष्ठा | जन्य व्रीहिनिष्ठा | ४२८ | ५ |
| पपत्ता | पपत्तौ | ४२६ | १४ |
| संकार | संस्कार | ४२८ | १३ |
| नै | तैः | ४३२ | ४ |
| गम | गमे | ४३३ | ११ |
| कोऽथ | कोऽर्थो | ४३४ | १४ |
| वर्णभ्यः | वर्णेभ्यः | ४३६ | १ |
| इत | इति | ४३७ | ४ |
| स्याथ | स्यार्थो | ४३८ | १ |
| भिन्ना | र्भिन्ना | ४४५ | ५ |
| चतुविध | चतुर्विध | ४४६ | १६ |
| रूपणा | रूपेण | ४५५ | ४ |
| भेदया | भेदयो | ४५५ | १४ |
| जात्व | गोत्व | ४५५ | १८ |
| कप | कर्ष | ४६१ | ११ |
| गात्व | गोत्व | ४६१ | १४ |
| दुष्यति | दुष्यति | ४७४ | २ |
| कुवत | कुर्वत | ४७४ | ४ |
| सांज्ञत | संज्ञित्व | ४८२ | ७ |

| अशुद्धम् | शुद्धम् | पृष्ठ संख्या | पंक्ति संख्या |
|---|---|---|---|
| काथ | कार्थ | ४८४ | ३ |
| हरायेत् | हार्येत् | ४९६ | ४ |
| कतृ | कर्तृ | ५०३ | ५ |
| रेका | रेको | ५०७ | ३ |
| ताहि | तर्हि | ५०७ | |
| चत्के | चेत्के | ५०८ | ६ |
| निदिश | निर्दिश | ५०९ | ११ |
| दशना | दर्शना | ५०९ | ११ |
| नन्तय | नन्तर्य | ५१२ | १ |
| रहिक | ऐहिक | ५१७ | ३ |
| धातुन्ना | धातुना | ५२७ | ५ |
| कतृत्व | कर्तृत्व | ५२८ | १ |
| भदात् | भेदात् | ५२८ | १ |
| माना | मानो | ५२९ | ११ |
| परेघ | परेद्यु | ५३२ | १६ |
| त्तश्च | त्तेश्च | ५४० | १६ |
| पहनोतु | पह्नोतु | ५४३ | १५ |
| यद्यपाय | यद्यु पाय | ५४५ | १० |
| सा | तस्याः | ५५६ | ८ |
| कण | कर्ण | ५६८ | १८ |
| वोयो | वायो | ५७१ | १ |
| रम्भकत्वे | रम्भकत्वं | ५७२ | १० |